# द्वितीयः सर्गः

अथ भारतवर्षीयदुर्दशां वक्तुमुत्त्वरः ।
देवर्षिर्नारदोनाम धातुर्धाम समाययौ ॥१॥

एक समय की बात है कि भारतवर्ष की दुर्दशा देखकर दुःखित हुए देवर्षि नारद उसका उद्धार पूंछने के लिये श्रीब्रह्मा जी के समीप पहुंचे ॥ १ ॥

तमुपागतमाकर्ण्य सनकाद्या महर्षयः ।
समाधिमपि सन्त्यज्य धाम्नि धातुरुपाययुः ॥२॥

ब्रह्मलोक में नारद जी का जाना सुनकर सनकादिक महर्षि भी अपनी २ समाधि छोड़ कर ब्रह्मदेव के पास पहुंचे ॥ २ ॥

स्वागताचारसत्कारं विधाय भगवानजः ।
प्रीतस्तानाह मुनयः ! किमर्थमुपसङ्गताः ॥३॥

नारद आदि अनेक महर्षियों को अपने स्थान पर उपस्थित देखकर प्रथम तो ब्रह्मदेव ने स्वागतपूर्वक उन सबका सत्कार किया फिर उनसे आने का कारण पूंछा ॥ ३ ॥

धातुरेवं विधां वाणीमाकर्ण्य सनकादयः ।
देवर्षिमेवपुरतश्चक्रिरे धृतकौतुकाः ॥४॥

ब्रह्मदेव के प्रश्न करने पर सनकादिक मुनियों ने भी उत्तर देने के लिये अपनी ओर से देवर्षि नारद को ही अगाड़ी किया ॥ ४ ॥

अथ देवर्षिरुचितां भारतस्यास्य दुर्दशाम् ।
सावधानेन मनसा प्रवक्तुमुपचक्रमे ॥५॥

देवर्षि नारद भी भारत की वर्तमान दुर्दशा को पूर्णरूप से कहने के लिये ब्रह्मदेव से इस प्रकार कहने लगे ॥ ५ ॥

जानात्येव भवान्सर्वं सर्वभूतविचेष्टितम् ।
तथापि भवतामाज्ञापालनाय वदाम्यहम् ॥६॥

भगवन् ! यद्यपि आप सब कुछ जानते हैं तथापि आपकी आज्ञा शिरोधार्य समझकर मैं जो कुछ कहता हूं उसे ध्यान पूर्वक सुनिये ॥ ६ ॥

विष्णोरंशावतारेण वासुदेवेन ये हताः ।
पुरा तएव कालेन यवनाः पुनरुत्थिताः ॥७॥

भगवान् विष्णु के अंशावतार स्वरूप श्रीवासुदेव ने अपने समय में जिन काल यवन आदि असुरों को नष्ट किया था वे ही अब दुबारा जन्म लेकर उत्पात मचा रहे हैं ॥ ७ ॥

संस्मृत्य ते पूर्ववैरं भारतीयजनव्रजम् ।
विनाशयन्ति बहवः साम्प्रतं यवनासुराः ॥८॥

वे पहिले वैर का स्मरण करके भारत के अन्दर अनेक प्रकार का उपद्रव उठाकर हिन्दू जनता का सर्वस्व नष्ट कर रहे हैं ॥८॥

केचिदुन्नतकूटानि मन्दिराणि पुरे पुरे ।
निपात्य तद्गतामूर्त्तीं भञ्जयन्ति मदोद्धताः ॥९॥

उनमें कोई उन्नत शिखर वाले अनेक देवी देवताओं के मन्दिर गिराकर उनकी मूर्त्तियों को नष्ट भ्रष्ट कर रहे हैं ॥९॥

निगमागमविज्ञानबोधकानृषिभिः कृतान् ।
ग्रन्थानग्नौ विनिक्षिप्य केचिद्दृष्यन्ति दुर्मदाः ॥१०॥

कोई अनन्त शास्त्र वेद वृक्ष को नष्ट करने के लिये उनकी अनेक शाखायें अग्नि में जलाकर वेदों का नाश कर रहे हैं ॥१०॥

तन्त्रसिद्धिमुपाश्रित्य यवनाः केपि वञ्चकाः ।
वञ्चयन्ति समीपस्थान्महदाश्चर्यकर्मभिः ॥११॥

कोई वंचक वेषधारी यवन-तान्त्रिक सिद्धि को प्राप्त कर आस पास की हिन्दू जनता को धर्म भ्रष्ट कर रहे हैं ॥११॥

परोपकारनिरतान्सज्जनान्वेदमार्गगान् ।
नानाविधैः प्रहरणैः प्रहरन्ति यथेच्छया ॥१२॥

कोई परोपकार में लगे हुए वेद मार्ग प्रतिष्ठापक सज्जनों को अनेक प्रकार के त्रास देकर यमपुर का अतिथि बना रहे हैं ॥१२॥

बौद्धभिक्षुधृतं वेशं विधृत्य यवनाः परे ।
तीर्थभूतानि धामानि दूषयन्ति मदाश्रयात् ॥१३॥

कोई बौद्ध भिक्षुओं द्वारा प्रवृत्त-काषाय वस्त्र पहिन कर भारत के प्रसिद्ध तीर्थ स्थानों को नष्ट कर रहे हैं ॥१३॥

विद्वेषबीजमास्थाय वैष्णवाः शिवपूजकान् ।
शैवा अपि विनिन्दन्ति वैष्णवानुत्तरोत्तरम् ॥१४॥

जहां एक ओर यह अनर्थ होरहे हैं—वहां दूसरी ओर गृह कलह भी छिड़ रहा है, वैष्णव शैवों का निरादर कर रहे हैं-और शैव वैष्णवों की निन्दा कर रहे हैं ॥१४॥

सीमाप्रान्तगते देशे सिन्धुतीरे तदुत्तरे ।
देशे पञ्चनदे तेषां बलमस्ति महत्तरम् ॥१५॥
गुर्जरेषु समद्रेषु काश्मीरधरणीतले ।
तेषामेवाधिकारोस्ति दुर्मदानां महत्तरः ॥१६॥

सीमा प्रान्त, सिन्ध, पञ्जाब, गुजरात, काठियावाड़, मद्रास, कश्मीर, आदि अनेक प्रान्तों में उनका ही बल है- और उनका ही अधिकार है ॥१५-१६॥

कथं तेषां समुद्धारः कदा वा सम्भविष्यति ।
इति प्रष्टुमहं तस्मादिहायातोस्मि दुःखितः ॥१७॥

इन देशों का उद्धार किस प्रकार और कब होगा-यही पूंछने के लिये मैं भारतवर्ष से आपके पास आया हूं ॥१७॥

तदुद्दाहर सर्वज्ञ ! जगदादिगुरो ! विधे !
उपायमुत्तमं तेषामुद्धाराय यथोचितम् ॥१८॥

इसलिये हे सर्वज्ञ ! आप उनके उद्धार का कोई उत्तम उपाय सोचकर इस समय हमको बताने की कृपा कीजिये ॥१८॥

इत्याकर्ण्य जगद्वन्द्यो धाता नारदभाषितम् ।
जगदुद्धारमनसा तमाह निजमात्मजम् ॥१९॥

इस प्रकार भारत की दुर्दशा सुनकर ब्रह्मदेव ने उसका उद्धार करने वाला एक उपाय-सोचकर नारदजी से कहा ॥१९॥

तमोगुणिप्रशमनं दमनं दण्डनन्तथा ।
भगवानेव शक्नोति कर्तुमन्यो न भूतले ॥२०॥

तमोगुण प्रधान सृष्टि का शमन तथा उसका दमन श्री-शंकर के अतिरिक्त संसार में अन्य कोई नहीं कर सकता है ॥ २० ॥

तस्मादहं भवन्तश्च सर्वेपि सनकादयः ।
कैलासशिखरावासं व्रजामोद्य महेश्वरम् ॥२१॥

इस कारण मैं आप सब लोगों के साथ कैलास के शिखर पर रहने वाले महेश्वर के समीप चलता हूँ ॥ २१ ॥

सएव जगतामीशो दुष्टानां दमनक्षमः ।
अस्मदुक्तं समाकर्ण्य करिष्यति यथोचितम् ॥२२॥

दुष्टों के दंड देने में समर्थ वे भगवान् शंकर ही आप लोगों की यह सब बातें सुन कर इनका यथोचित उत्तर देंगे ॥ २२ ॥

इत्यामन्त्र्य समं सर्वैर्विधाता भगवानजः ।
प्राप कैलासशिखरं दिव्यद्रुमविभूषितम् ॥२३॥

इस प्रकार सबके साथ मन्त्रण करके ब्रह्मदेव जी सुन्दर वृक्षों से अलंकृत कैलास शिखर पर पहुँचे ॥ २३ ॥

[ नवभिः कुलकम् ]

तत्र दृष्ट्वा तमीशानं ध्यानस्तिमितलोचनम् ।
स्थूलकाष्ठसमिद्धाग्निपरिवेष्टितगह्वरम् ॥२४॥
प्रलयान्तमहानिद्रासुप्तसंसृतिविस्तरम् ।
सर्गारम्भसमारब्धसर्वकारणकारणम् ॥२५॥
करालकालकूटाग्निस्फुलिङ्गकृतकौतुकम् ।
फणामणिप्रभापंक्तिदुर्निरीक्ष्यमुखप्रभम् ॥२६॥

गङ्गातरङ्गसङ्गाप्तशीतवायुनिषेवितम् ।
शशिलेखापरिक्षिप्ततमःपटलसंहतिम् ॥२७॥
दिगन्तव्याप्तसच्छायजटामण्डलमण्डितम् ।
चितारजःसमालेपपवित्रीकृतविग्रहम् ॥२८॥
देवदानवगन्धर्वयक्षरक्षोगणेश्वरैः ।
किरीटकोटिसंस्पृष्टविशोभिचरणद्वयम् ॥२९॥
ध्यानान्तकालसंदृष्टपार्वतीकृतसंस्तवम् ।
वराभयचरित्राणप्राणदानपरायणम् ॥३०॥
व्याघ्रचर्माम्बरधरं व्यालयज्ञोपवीतिनम् ।
निवृत्तविषयासङ्गं देवदानवदुःसहम् ॥३१॥
नन्दिनिर्दिष्टदेवेशदर्शनावसरस्थिरम् ।
ननाम दण्डवद्भूमौ निपत्य भगवानजः ॥३२॥

वहां पहुंच कर ब्रह्मदेव ने ध्यानस्तिमितलोचन प्रलय और सर्ग के अद्वितीय कारण कालकूटाग्निकणमंजुल फणामणिप्रकाशदर्शनीय शीतल वायु से वीज्यमान चन्द्रलेखामण्डित जटामण्डल मण्डित चितारजोद्धूलितविग्रह देवदानवादिसमस्तजगद्वन्दित वराभयं वरप्रदं व्याघ्रचर्माम्बरधर व्यालयज्ञोपवीत निवृत्तविषयासंग शंकरजी को देखकर सर्व प्रथम साष्टांग प्रणाम किया ॥ २४-३२ ॥

तं तथाविधमालोक्य धातारं पुरतः स्थितम् ।
करुणारुणया दृष्ट्या प्रतिजग्राह धूर्जटिः ॥३३॥

साष्टांग प्रणत ब्रह्मा जी को देख कर भगवान् शंकर ने भी करुणा पूर्णभाव से उनका समयोचित स्वागत कर उनसे आगमन का कारण पूछा ॥ ३६ ॥

ब्रह्मापि सर्वमावेद्य निजागमनकारणम् ।
शिवादेशप्रतीचोत्कमानसः समपद्यत ॥३४॥

ब्रह्माजी ने भी आगमन का कारण बताकर उत्तर की प्रतीक्षा में कुछ समय वहां व्यतीत किया ॥ ३४ ॥

दृष्ट्वा सुतं वृषाङ्काङ्कैरङ्कितं नानकोगुरुः ।
मोदेन महताविष्टो जातकर्माण्यकारयत् ॥ ४८ ॥

गुरु नानकदेव जी ने जब अपने नवजात शिशु को भगवान शंकर के चिन्हों से अलंकृत देखा तब बहुत विस्मित होकर जात-कर्म संस्कार कराया ॥ ४८ ॥

वेदोदितेन विधिना शिशोर्जातस्य धैर्यतः ।
जातकर्मणि निर्वृत्ते महोत्साहो व्यवर्धत ॥४६॥

वैदिक विधि से जात कर्म संस्कार होने पर आपके जन्मोत्सव के उपलक्ष्य में सर्वत्र उत्सव होने लगा ॥ ४९ ॥

नानादिगन्तरालस्थमहोदयपरम्परा ।
महोदयमिमं देवमभितः पर्यवेष्टयत् ॥५०॥

आपके अवतार समय में लोक में जो उत्सव परम्परा प्रवृत्त हुई उसने आप को सब ओर प्रसिद्ध कर दिया ॥ ५० ॥

एकादशेन्हि सम्प्राप्ते नामस्थापनमङ्गलम् ।
वैदिकेन विधानेन तस्यास्य परिकल्पितम् ॥५१॥

जन्म से ग्यारहवें दिन आपके पिता जी ने वैदिक पद्धति से आपका नाम करण संस्कार कराया ॥ ५१ ॥

आह्लादकगुणोत्कर्षं श्रिया सह विलोकयन् ।
श्रीचन्द्र इति तन्नाम पण्डितैः परिकल्पितम् ॥५२॥

शोभा सम्पत्ति और आह्लाद इन तीनों गुणों का सामञ्जस्य देखकर उस समय के विद्वानों ने आप का नाम "श्रीचन्द्र" रख दिया ॥ ५२ ॥

अन्वर्थकं मुनेर्नाम यस्यलोकैः प्रगीयते ।
श्रीचन्द्रमौलिर्भगवान्सएवायमवर्धत ॥५३॥

"यथा नाम तथा गुणः" इस लोकोक्ति के अनुसार जिनका नाम धरा गया था वे श्रीचन्द्र अब क्रमशः वृद्धि की ओर बढ़ने लगे ॥ ५३ ॥

दिने दिने यथोत्कर्षं कलाभिर्याति चन्द्रमाः ।
तथैवायमवाप स्वं श्रीचन्द्रः सर्वलक्षणैः ॥५४॥

जिस प्रकार शुक्ल पक्ष में एक २ कला की अभिवृद्धि से चंद्रमा वृद्धि को प्राप्त होता है उसी प्रकार श्रीचन्द्र भी देनंदिन अभिवृद्धि से वृद्धि की ओर अग्रसर हुए ॥ ५४ ॥

मुदितावस्य जननात्पितरौ देवलक्षणौ ।
नानाविधशिशुक्रीडारसमेकान्तमापतुः ॥५५॥

आपके जन्म से अत्यन्त प्रसन्न माता पिता भी आपकी बाल लीला का अनेक प्रकार से अनुभव करने लगे ॥ ५५ ॥

शिशुरप्ययमाह्लादकारणत्वमुपागतः ।
चिक्रीड बहुभिः सार्द्धं बालकैः सहजन्मभिः ॥५६॥

कुटुम्ब के आनन्द का कारण बनकर श्रीचन्द्र भी अपने अन्य कौटुम्बिक बालकों के साथ २ क्रीडा में प्रवृत्त हुए ॥ ५६ ॥

कदापि वनमासाद्य बालकैः सह तद्गतान् ।
नागान्नगानिव प्रेम्णा पस्पर्श धृतकौतुकः ॥५७॥
क्वचिद्वनोदरव्याप्तभीमनादविनोदिनम् ।
नवं केसरिणः सूनुं पप्रच्छ कुशलं मुनिः ॥५८॥
कदाचिद् गृहमागत्य याचन्तं कमपि द्विजम् ।
मौक्तिकैः प्रीणयामास बालभावगतः शिवः ॥५९॥
मन्दिरोदरमाविश्य कदाचिद्बालकैः सह ।
भगवन्तमुमानाथमनाथं समपूजयत् ॥६०॥
वनोदरमुपागत्य तरुच्छायासमाश्रितान् ।
कदाचिद्बालकानेष बालकोऽप्यन्वशिक्षयत् ॥६१॥

कभी बालकों के साथ वन जाकर अत्यन्त कुतूहल से बड़े २ फणिधर सर्पों को पकड़ने लगे कभी गहर बन में जाकर शब्द करते हुए सिंह शावक से ही कुशल पूछने लगे कभी गृह द्वार पर आए हुए याचक को मोती देकर हंसने लगे कभी बालकों के साथ साथ शिव मंदिर में जाकर शिव जी का पूजन करने लगे कभी वन में वृक्षों की छाया में अपने साथी बालकों को बिठाकर उनको धार्मिक

उपदेश देने लगे इसी प्रकार की अनेक अद्भुत बाल लीलायें करते हुए आपने अपने शैशव को समाप्त किया ॥ ५७-६१ ॥

निवृत्ते शैशवे दैवाद्गर्भादेकादशे शुभे ।
वत्सरे समनुप्राप्ते ब्रह्मचर्यमगादयम् ॥६२॥
श्रौतेन विधिना सर्वमुपवीतप्रसाधनम् ।
तदा श्रौतमुनेरस्य समभून्मुनिभिः कृतम् ॥६३॥

शैशव के समाप्त होने पर गर्भ से ग्यारहवें वर्ष में आपका उपनयन हुआ जिसमें समस्त कार्य श्रौत विधि से ही मुनि जनों ने सम्पादित किया ॥ ६२-६३ ॥

ब्रह्मसूत्रमुपादाय सशिखं सहमेखलम् ।
धर्मतः क्षत्रियोऽप्येष पलाशं दण्डमाहरत् ॥६४॥

क्षत्रियोचित मेखला और उपवीत के साथ शिखा धारण करते हुए आपने विपर्यय से दंड धारण किया अर्थात् वट दंड के साथ २ आपने पलाश दण्ड का भी ग्रहण किया इसका प्रयोजन अग्रिम दो पद्यों में देखिये ॥ ६४ ॥

पलं मांसमितिप्रोक्तं ये तदश्नन्ति राक्षसाः ।
पलाशास्ते समाख्याता यवनाः पापकारिणः ॥६५॥
तेषु दण्डं समाधातुं यत्नेष्वेष बालकः ।
पलाशदण्डादरणे धृतोद्योगस्तदाऽभवत् ॥६६॥

पल नाम मांस का है उसका जो अशन करते हैं उनको "पलाश" कहते हैं,उनको दण्ड देना लक्ष्य में रखकर आपने व्रतबन्ध के समय वट दंड के साथ २ पलाश दंड का भी धारण किया यहां पर दंड में श्लिष्ट रूपक है ॥ ६५-६६ ॥

अक्षरारम्भतः पश्चादयं क्रमसमुन्नतः ।
गीतां भगवता गीतां दयालोरपठद्गुरोः ॥६७॥

इसके अनन्तर कुछ ही दिनों में अक्षराभ्यास करके आपने अपने गुरुवर्य श्री पं० हरदयालु जी से भगवद्गीता का अध्ययन आरम्भ किया ॥ ६७ ॥

एकवारश्रुताधीतधारणाधिषणो व्रती ।
सद्यः समापयत्पाठमयं गीतागतं गुरुः ॥६८॥

एक बार गुरु मुख से गीता सुनकर उसका यथोचित ग्रहण करके आपने कुछ ही दिनों में समस्त भगवद्गीता का अध्ययन समाप्त किया ॥ ६८ ॥

गुरोर्निदेशतः पश्चादयं मातुरनुज्ञया ।
शिवं श्रीनगरं श्रीमान् श्रीचन्द्रः प्राप सत्वरम् ॥६९॥

इसके अनन्तर अपने गुरुवर्य तथा अपनी माता जी से आज्ञा लेकर आप विद्याध्ययन के लिये श्रीनगर पहुँचे ॥ ६० ॥

काश्मीरं देशमासाद्य पुरुषोत्तमतो गुरोः ।
समस्तं वेदवेदाङ्गोपाङ्गपाठमपूरयत् ॥७०॥

काश्मीर देश की राजधानी श्रीनगर पहुँच कर आपने पण्डित पुरुषोत्तम जी से समस्त वेद एवं वेदाङ्गों का अध्ययन किया ॥ ७० ॥

लवे यथा स्वतःसिद्धं जृम्भकास्त्रमभूत्तथा ।
शिवावतारेऽत्र मुनौ शास्त्रं स्वयमुपागमत् ॥७१॥

भगवान् रामचन्द्र जी के सुपुत्र लव के पास जिस प्रकार सरहस्य जृम्भकास्त्र अपने आप उपस्थित हुए उसी प्रकार शिवावतार श्रीचन्द्र मुनि में समस्त शास्त्र अनायास उपस्थित हुए ॥ ७१ ॥

पैशुन्यपूर्णमनसामयं स्वसहपाठिनाम् ।
लज्जयाऽवनतं चक्रे मुखं गुरुपरीक्षणे ॥७२॥

आपके सहपाठी सहज पैशून्य के कारण जब गुरु जी के समक्ष आपकी चुगली करते थे उस समय आप समस्त पाठ कंठस्थ सुनाकर उनका मस्तक नीचा करते थे ॥ ७२ ॥

एवमादर्शचरितो ब्रह्मचारी दृढव्रतः ।
श्रीचन्द्रमौलिरेकान्ते ध्यानयोगपरोऽभवत् ॥७३॥

इस प्रकार आदर्श चरित पूर्ण ब्रह्मचारी दृढ व्रत श्रीचन्द्र भगवान् समस्त वेद वेदाङ्गों को नियम पूर्वक पढ़कर अन्त में ध्यान योग में तत्पर हुए ॥ ७३ ॥

मयाप्येतस्य धीरस्य धीरोदात्तस्य धीमतः ।
एतावदत्र वृत्तान्तं विनिवेद्य विरम्यते ॥७४॥

हमने भी यहां धीरोदात्त श्रीचन्द्र भगवान् का इतना वृत्तान्त लिखकर सज्जनों के समक्ष उपस्थित किया है ॥ ७४ ॥

एवंविधस्य जगदुद्धरणक्षमस्य
लोकोपकारकमनोहरभव्यमूर्त्तेः ।
नानाविधैरुपचितं ललितैः सुवृत्तैः
श्रीचन्द्रमौलिचरितं पठतादरेण ॥७५॥

इस प्रकार के भारत हितैषी धर्मपरायण जगत् के उद्धार में समर्थ श्रीचन्द्र भगवान् के चरित्र से अलंकृत यह महाकाव्य आपके समक्ष में प्रस्तुत है ॥ ७५ ॥

ये भावपूर्णमनसो मनसोपबद्धं
भावाभिराममरमणीयपदं ममेदम् ।
काव्यं विलोक्य हृदये मुदिता भवेयु–
स्ते चन्द्रमौलिकरुणामतुलां भजेयुः ॥७६॥

जो महानुभाव भावपूर्ण मन से इस का अवलोकन कर अपने हृदय में आनन्दित होंगे उन पर श्रीचन्द्र भगवान् की कृपा अवश्य रहेगी ॥ ७६ ॥

नातःपरं निजविनिर्मितकाव्यबन्धे
वक्तव्यमस्त्यपरमादरतो निवेद्यम् ।
किन्त्वेकमस्ति भवतां पुरतस्तदेतद्–
द्रष्टव्यमेतदधुना कृपया भवद्भिः ॥७७॥

इससे अधिक इस महाकाव्य में हम कुछ नहीं कहना चाहते हैं सन्तों से केवल इतना ही कहते हैं कि आप इसका ध्यान पूर्वक अवलोकन करें ॥ ७७ ॥

इतिश्री सनाढ्यवंशोद्भव कविवर श्रीमद्रसिलानन्दशर्मप्रणीते
सतिलके श्रीचन्द्रमौलिचरिते महाकाव्ये
शिवावतारोनाम–द्वितीयः सर्गः

---

## तृतीयः सर्गः

अथात्तविद्यो विधिवद्गुरुभ्यः
स चन्द्रमौलिर्भगवानुदारः ।
गुहोदरे ध्यानपरोऽवतस्थे
विचारयन्भारतवर्षभावान् ॥१॥

विधिपूर्वक विद्याध्ययन के अनन्तर उदारचरित श्रीचन्द्र भगवान् पर्वत की गहर कन्दरा में ध्यानावस्थित होकर भारतवर्ष की दशा पर विचार करने लगे ॥१॥

चतुर्दशाब्देन मयाऽधुना किं
भुवस्तले मुख्यमवश्यकार्यम् ।
विधेयमित्येव हृदन्तरेऽस्य
विचारपंक्तिः प्रससार सारा ॥२॥

सबसे प्रथम आपके हृदय में यह प्रश्न उठा कि विद्याध्ययन करते २ हमारी अवस्था चौदहवर्ष की व्यतीत हुई, अब हमको कौनसा कार्य करना चाहिये ॥२॥

गृहानुबन्धेषु यदि प्रसक्तो
भवेयमन्यत्सकलं विहाय ।
वृथैव जन्मेदमनेन भूयो
भविष्यति प्रत्यवरुद्धशक्तेः ॥३॥

यदि अन्य कार्य छोड़ कर मैं गृह के कार्यों में प्रवृत्त होता हूं, तो उसके द्वारा शक्ति का ह्रास होने पर मेरा यह जन्म ही व्यर्थ जाता है ॥३॥

कृतेन किं तेन मया यदत्र
पुनर्भवेद्बन्धनहेतुभूतम् ।
विमुक्तिमार्गं व्रजतां जनानां
न बन्धनेषु स्खलनं शिवाय ॥४॥

जिस कार्य के करने से संसार में बार २ आवागमन का चक्र उच्छिन्न नहीं होता है, उस कार्य में मुक्तिमार्ग के पथिकों का चलना उचित नहीं है ॥४॥

ममास्ति कश्चिन्न पिता न माता
न पूर्वजन्मानुगकर्मबन्धः ।
निरञ्जनोहं भगवन्निदेशा-
दिहागतः कर्त्तुमनन्यसाध्यम् ॥५॥

मैं मुक्त पुरुष हूं, मेरे साथ पूर्व कर्म का कोई बन्धन नहीं है-इसीलिये मेरी न कोई माता है-और न कोई पिता है, मैं स्वभावतः निरञ्जन निर्विकार हूँ। केवल ईश्वरादेशसे अनन्य साध्य कार्य करनेके लिये पृथिवी पर अवतीर्ण हुआ हूं ॥५॥

मयोपदिष्टेन पथा जगत्यां
जना गमिष्यन्ति ततो मयात्र ।
तदेव कर्तव्यमितो यथास्या-
न्ममानुगानान्न कदापि बन्धः ॥६॥

मेरे चलाये हुये मार्ग पर संसार चलेगा-इसलिये मुझको वही कार्य करना चाहिये, जिससे मेरे अनुगामियों को संसार के बन्धनों में बार २ न पड़ना पड़े ॥६॥

मनुष्यकर्तव्यमिदं विधिज्ञै-
रुदीर्यते संसृतिचक्रगर्ते ।
परम्परातः पतितस्य जन्तो-
र्निवारणं तत्कृतकर्मबन्धात् ॥७॥

संसार चक्र में पड़े हुये पुरुषों का उद्धार करना ही मुक्तमनों का एकमात्र कर्तव्य है और यही वेदज्ञ विद्वानों ने मनुष्य का परम-कर्त्तव्य बतलाया है ॥७॥

सनत्कुमारः सनको मुनीन्द्रः
सनन्दनोन्यः स सनातनोऽपि ।
गुरुर्मुनीनामभवद्धिहाय
प्रवृत्तिमार्गं भवबन्धमूलम् ॥८॥

हमारे मार्ग प्रदर्शक सनक सनन्दन सनातन और सनत्कुमार हैं जो प्रवृत्ति मार्ग को छोड़कर पहिले से ही निवृत्ति मार्ग परक मुनि मंडलके गुरु कहे जाते हैं ॥८॥

महानुभावा मुनयो महान्तः
प्रवृत्तिमार्गं परिहाय दूरे ।
निवृत्तिमार्गं प्रगतास्ततोहं
तमेव मार्गं विधिवद्ग्रहीष्ये ॥९॥

संसार में सभी महा पुरुष प्रवृत्ति मार्ग को छोड़ कर निवृत्ति मार्ग में प्रवृत्त हुए, इस कारण मैं भी विधिपूर्वक निवृत्ति मार्ग पर ही चलूंगा ॥ ९ ॥

इदं स्वचेतस्यवधार्य सद्यः
स चन्द्रमौलेरवतारमासः ।
गुरोः प्रतीक्षामकरोत्स्ववेशं
निवृत्तिमार्गानुगतं विधातुम् ॥१०॥

इस प्रकार अपने मन में दृढ़ निश्चय करके शिवावतार श्री चन्द्र भगवान् निवृत्ति मार्ग के अनुकूल अपने वेष को बनाने के लिये सद्गुरुकी प्रतीक्षा में रहे ॥१०॥

जटाधरो हस्तगृहीतमालः
समाधिसंयोजितसर्वकालः ।
विसृष्टनानाविधकार्यजालः
प्रभाविशेषप्रथमानभालः ॥११॥

मनोविकारप्रधने कराल-
स्तपोधनानां सविधे मरालः ।
बनान्तवासी वयसातिबालः
समाधियोगानुगतस्तदासीत् ॥१२॥

उस समय में आपका वेष बड़ा ही सुन्दर था आपके शिर पर सुन्दर २ जटायें चमक रहीं थीं हाथ में स्फटिक माला और मुख पर प्रभा मंडल चमक

रहा। था। वन में निवास होने के कारण आपका समस्त काल समाधि योग में व्यतीत होता था मन के विकारों के साथ आपका युद्ध ठना हुआ था और अहर्निश सनकादि मुनियों के चरित्र पर ध्यान रहता था इस वेष के साथ आपका समय वन में व्यतीत होता था ॥ ११-१२ ॥

निरोद्धुमेनं विरतिप्रसंगा-
च्छशाक नो तत्र गतः पितापि ।
न बान्धवः कोपि नचास्यमाता
निवृत्तिमार्गानुगतं मुनीन्द्रम् ॥१३॥

इसी अवसर में आपके पास कुटुम्ब के समस्त पारिवारिक जन आपको घर ले जाने के लिये अनेक प्रयत्न करने लगे परन्तु अन्तमें वे सब विफल प्रयत्न रहे।१३।

गुरोः प्रतीक्षानिरतस्य तस्य
दिनानि यावन्ति ययुर्वनान्ते ।
समोपमान्येव समाधियोगे
स कल्पयामास विरक्तभावः ॥१४॥

गुरु की प्रतीक्षा में वन में रहते हुए आपको जितने दिन व्यतीत हुए वे सब एक २ वर्ष के बराबर प्रतीत होने लगे ॥ १४ ॥

अथ प्रसङ्गादविनाशिनामा
मुनिः प्रशस्तामरनाथयात्राम् ।
प्रकर्तुमागात्तमनुप्रदेशं
यदेकदेशे भगवानतिष्ठत् ॥१५॥

इसके अनन्तर प्रसंग से अविनाशी मुनि प्रसिद्ध अमरनाथ की यात्रा करने की इच्छा से उसी ओर आरहे थे जिस ओर आपका निवास था ॥ १५ ॥

मुनेरभूदस्य मनस्यलक्ष्या
भुवं समुद्धर्तुमलं मनीषा ।
तया तदानीमुपयातवत्या
सहैव सम्पादितमत्र कार्यम् ॥१६॥

संसार के उद्धार करने की जो इच्छा अदृश्य रूप में आपके हृदय में विद्यमान थी उसी ने समय पाकर यह सब आयोजन एकत्र कर दिया ॥ १६ ॥

मुनिर्गुरोरागमनप्रतीक्षो
गुरुर्मुनेरागमनप्रतीक्षः ।
क्रमादुभौ दैववशेन तत्र
परस्परं सङ्गममापतुस्तम् ॥१७॥

आपके हृदय में सद्गुरु प्राप्त करनेकी प्रबल इच्छा थी और अविनाशी मुनि के चित्त में सच्छिष्य प्राप्त करनेकी बड़ी इच्छा थी दैवयोग से दोनों की इच्छाओं के पूर्ण होने का अवसर उपस्थित हुआ ॥ १७ ॥

प्रसङ्गतः श्रीपुरुषोत्तमस्य
गुरोः समीपे गुरुभक्तिनिष्ठः ।
स्वतः समाकर्णयितुं जनेभ्यो
गुरुप्रशस्तिं स मुनिः समागात् ॥१८॥

इसी अवसर में प्रसंग से आप अविनाशी मुनि की प्रशंसा सुनने के लिये अपने गुरुवर्य श्री प० पुरुषोत्तम जी के स्थान पर आए ॥ १८ ॥

समागतं श्रीपुरुषोत्तमस्तं
मुनिं प्रसङ्गादविनाशिनाम्नः ।
महामुनीन्द्रस्य गुरोः प्रशस्तिं
निबोधयामास कथाक्रमेण ॥१६॥

पुरुषोत्तम जी ने भी अपने पास आए हुए श्रीचन्द्रमौलि को देखकर अविनाशी मुनि का समस्त वृत्तान्त यथा क्रम कहना आरम्भ किया ॥ १९ ॥

गुरोर्मुखादुच्चतमां प्रशस्तिं
महामुनेरस्य निपीय तुष्टः
स चन्द्रमौलिर्निभृतं दिनान्ते
समाप तस्योटजधाम दिव्यम् ॥२०॥

अपने गुरु जी से अविनाशी मुनि की प्रशंसा सुनकर श्रीचन्द्र जी मन में बहुत प्रसन्न हुए और सायंकाल के समय अविनाशी मुनि के स्थान पर पहुंचे ॥२०॥

गतेषु सर्वेषु कथाप्रदेशा-
ज्जनेषु पश्चादवशिष्य तेभ्यः।
रहस्यभूतं कमपि स्व-भावं
गुरोः समीपे समपृच्छदेषः ॥ २१ ॥

वहां पर दर्शनार्थ आये हुए मनुष्यों के यथा क्रम उठ जाने पर सब से पीछे आपने अवसर पाकर अपना हृद्गत भाव उनसे कहना आरंभ किया ॥ २१ ॥

कथं मया वास्तविकी सुशान्ति-
र्गुरो जगत्यामिह सा प्रलभ्या।
यया भवोद्बन्धनजालभित्तिः
स्वयं विनाशं समयेन यायात् ॥ २२ ॥

आपने कहा भगवन् इस संसार में भव बन्ध का उच्छेद करने वाली वास्तविक शान्ति मनुष्य को किस प्रकार से प्राप्त हो सकती है ॥ २२ ॥

अनन्यसाधारणमप्युपायं
क्रमेण साधारणरीतिगत्या।
गुरो भवानद्य दयोदयेन
वदत्ववश्यं परमार्थदृष्टिः ॥ २३ ॥

उसकी प्राप्ति का जो कठिन से कठिन उपाय हो वह आप कृपा करके हम को सरल रीति से बतलाने की कृपा कीजिये ॥ २३ ॥

इदं निवेद्यात्मगतं रहस्यं
मुनौ निवृत्ते समयक्रमेण।
गुरुः प्रसादादविनाशिनामा
समुत्तरं वक्तुमनास्तमाह ॥ २४ ॥

इस प्रकार हृद्गत भाव के कहने पर मौन हुए श्रीचन्द्र जी के प्रति अविनाशी मुनि ने जो उत्तर दिया वह भी सुनिये ॥ २४ ॥

[ युग्मम् ]

समस्तसच्छास्त्रकथानुरागः
सुसङ्गतिः सत्पुरुषोत्तमानाम् ।
क्रमेण योगानुरतिः समाधौ
निजाधिकारः परमार्थदृष्टिः ॥ २५ ॥

परोपकारव्यसनं विरागो
निरोधनं सत्वरमिन्द्रियाणाम् ।
वनेषुवासः परमात्मनिष्ठा
ददाति शान्तिं नियमानुगेभ्यः ॥२६॥

आपने कहा—अच्छे शास्त्रों का श्रवण, उत्तम पुरुषों का सङ्ग, योगाभ्यास, समाधि पर अधिकार, परमार्थ दर्शन, परोपकार करने का व्यसन, वैराग्य इन्द्रियों का निग्रह, वन में निवास आत्म-चिन्तन इन बातों पर ध्यान रखने से मनुष्य को वास्तविक शान्ति प्राप्त होती है ॥ २५-२६ ॥

इदं समाकर्ण्य वचः स योगी
यथोचितं तत्प्रतिवक्तुकामः ।
पुनर्मुनीन्द्रं प्रणिपत्य हर्षा-
दुवाचयोगेच्छितसत्प्रभावः ॥२७॥

इसप्रकार अविनाशी गुरु से प्रश्न का उत्तर मिलने पर आपने उसके विषय में और कुछ कहने के लिये अपनी इच्छा प्रकट की ॥ २७ ॥

[ युग्मम् ]

मुने मयाधीतमलं गुरुभ्यः
समस्तशास्त्रं विहितोस्ति योगः ।
कृतोधिकारश्चरमः समाधौ
सुसङ्गमश्चापि महामुनीनाम् ॥२८॥

निरुद्धमेवास्ति मनो निसर्गा-
दितस्ततो योगबलेन रुद्धम् ।
परं न शान्तिः समुदेति चित्ते
भवत्कृपेच्छुस्तदहं प्रपन्नः ॥२६॥

आपने कहा मैंने गुरुजनों से वेदादिशास्त्रों का अध्ययन किया साथ ही योग का अभ्यास समाधि पर पूर्ण अधिकार मुनियों का सत्संग भी किया इसके अतिरिक्त योगाभ्यास से मन भी वश में कर लिया परन्तु इतना करने पर भी चित्त में शान्ति न हुई इसलिये आपके समीप आया हूं॥ २८-२९ ॥

भवत्पदाम्भोरुहदर्शनेन
हृदन्तरे शान्तिरुदेति सद्यः ।
प्रभो यथा सा स्थिरतामुपेया-
त्तथा भवानद्य करोतु दृष्टिम् ॥३०॥

आपके चरणारविन्द के दर्शन से चित्त में शान्ति तो उत्पन्न होती है परन्तु स्थिर नहीं रहती इसलिये आप ऐसी दया दृष्टि करें जिससे वह शान्ति सर्वदा स्थिर बनी रहे ॥ ३० ॥

इदं निशम्यार्थयुतं वचोऽस्य
मुनेः सदैवादविनाशिनामा ।
समाहितान्तःकरणो बभूव
तदेकदृष्टिर्विगतान्यचेष्टः ॥३१॥

इस प्रकार आपने कथन का प्रत्युत्तर सुन कर अविनाशी मुनि अपने विचार में निमग्न हुये और गम्भीर भाव से श्रीचन्द्रजी की ओर देखकर विस्मित हुये।३१।

विलोक्य स ध्यानदशा मुनीन्द्रं
शिवावतारं शिवमेव साक्षात् ।
विहस्य पश्चादिदमाह शम्भो !
त्वमेव धन्योसि दयावतारः ॥३२॥

ध्यान-योग के द्वारा कुछ विलम्ब के पश्चात् जब अविनाशी मुनि ने श्रीचन्द्र
जी को साक्षात् शिव स्वरूप में देखा, तब श्रीचन्द्रजी से आप कहने लगे कि आप
। शिवावतार होने के कारण स्वयं धन्य हैं—आपके समक्ष मैं क्या कह
सकता हूं ॥ ३२ ॥

भवत्पदाम्भोरुहदास्यमाप्य
समस्तभूतप्रशमोपयुक्ता ।
अनन्तशान्तिर्मनुजानुपैति
यदर्थमेषो भगवन्प्रयासः ॥३३॥

जिस शान्ति का आप अन्वेषण करते हैं, वह तो आपके चरणों की दासी
बनकर समस्त विश्व को वश में कर सकती है और आपकी कृपा से ही हम जैसे
मनुष्यों को वह प्राप्त होती है ॥ ३३ ॥

महत्वमस्मभ्यमिदं प्रदातुं
यदस्ति चित्ते भवतस्तदाहम् ।
वदामि याहक्समयोधुनास्ते
यदस्तिचास्मिन्समयेऽनुकूलम् ॥३४॥

यदि आप मुझे महत्व देने के लिये इस प्रकार की लीला कर रहे हैं तो
देश कालानुरूप आपसे मैं कुछ निवेदन करता हूं ॥ ३४ ॥

भवानिदं वेत्ति समाधियोगा-
न्मनो जनानामधुना विनष्टम् ।
हृदि प्रवृत्ता विकृतिर्भविष्ये
भयङ्करो यत्परिणामभागः ॥३५॥

समाधि-योग के द्वारा यह आप स्वयं जानते हैं कि वर्तमान समय में मनुष्यों
की चित्त-वृत्ति धर्म से हट कर पाप में प्रवृत्त हुई है, जिसका परिणाम भविष्य में
बड़ा भयङ्कर होने वाला है ॥ ३५ ॥

भवत्प्रयासेन समस्तमेत-
द्विनाशमेष्यत्यघमं जनानाम् ॥

हृदिस्थितं पापमपास्तसौख्यं
यदर्थमेषो मम दीर्घयत्नः ॥३६॥

मेरी अनुमति में आपके प्रयत्न से यह व्यतिक्रम दूर हो सकता है, इस लिये आप कृपा कर के इस व्यतिक्रम के दूर करने का कोई उपाय सोचिये ? मैंने भी बहुत दिनों से इस पर विचार किया है ॥ ३६ ॥

इदं निवेद्यात्मगतं प्रकाशं
शिवावतारस्य पुरो महात्मा ।
बभूव तूष्णीमनघप्रवृत्ते-
र्जहास पश्चान्मुदितो यथावत् ॥३७॥

इस प्रकार अपने हृद्गत अभिप्रायको श्रीचन्द्र जीके समक्ष कहकर अविनाशी मुनि निवृत्त हुये, इन बातों का रहस्य तत्ववेत्ता मुनि ही समझ सकते हैं ॥३७॥

समस्तमेतद्धृदये निधाय
निजोचितं कार्यमसौ मुनीशः ।
मुनिव्रतं पूर्णतयाधिगत्य
गुरोरुदासीनपथं समागात् ॥३८॥

अविनाशी मुनि के द्वारा प्राप्त समयोचित सदुपदेश हृदय में धर कर श्रीचन्द्र भगवान् मुनिव्रत प्राप्त करने के लिये उनसे प्रार्थना करने लगे ॥ ३७ ॥

अवाप्य दीक्षामविनाशिनाम्नो
गुरोः सकाशादयमात्मनिष्ठः ।
कृतानि तान्येव चकार यानि
मुनिः स्वदीक्षासमये जगाद ॥३९॥

इसी अवसर में अविनाशी मुनि से निवृत्ति मार्ग की दीक्षा लेकर आपने उस कार्य का आरम्भ किया जिसकी मन्त्रणा दीक्षा के समय हुई थी ॥ ३९ ॥

त्रिधिप्रदिष्टं मुनिभिः पुराणै-
रुपासितं धर्मपथाऽविरुद्धम् ।

गुरोरुदासीनपथं प्रगृह्य
निरस्तचिन्तो भगवान्बभूव ॥४०॥

वेदों द्वारा समर्थित तथा सनकादि मुनियों द्वारा सेवित परम्परा प्राप्त उदासीन व्रत को अविनाशी मुनि से प्राप्त कर श्रीचन्द्रमौलि सर्वदा के लिये निश्चिन्त हो गये ॥ ४० ॥

हृदिस्थितानां शुभवासनानां
प्रसंगमभ्येत्य पुरःस्थितानाम् ।
शिवावतारश्चकमे समृद्धिं
यथा समेयाद्भुवनं प्रसिद्धिम् ॥४१॥

अपने हृदय में उत्पन्न शुभ वासनाओं को समक्ष में उपस्थित देखकर भगवान् अपने कार्य में प्रवृत्त हुये ॥ ४१ ॥

भुवस्तले या विकृतिः प्रवृत्ता
बलान्निराकर्तुमना मुनिस्ताम् ।
विचारमात्मन्यवरुद्धवेगं
चिराय वव्रे कृतयोगमायः ॥४२॥

संसार में मनुष्यों के चित्त में अनेक प्रकार के जो विकार उत्पन्न हुये उनको हटाने के लिये आपने अपने हृदय में दृढ़-प्रतिज्ञा की और समयोचित आयोजन एकत्र करने में आप तत्पर हुये ॥ ४२ ॥

अतःपरं यत्परमं पवित्रं
चरित्रमस्याभवदत्र लोके ।
तदग्रिमे सर्वजनैर्विलोक्यं

क्व समयपरिणामस्तादृशोभारतेस्मि-
न्क्व पुनरुपशमाय श्रीशिवस्यावतारः ।
उभयमिदमभूद्यत्प्रेरणापारवश्या-
ज्जयति स जगदीशो विश्ववन्द्यो महेशः ॥४४॥

भारत में विप्लव मचाने वाला--कहाँ कलिकाल का विकाश ? और उसके उपशम करने के लिये कहां श्रीचन्द्रमौलि भगवान्‌का अवतार ? यह दोनों घटनायें [ काकतालीय न्याय से ] जिस शङ्कर भगवान् की प्रेरणा से एक साथ लोक में प्रवृत्त हुईं, वह जगत् के एक मात्र अध्यक्ष भगवान् शङ्कर ही वन्दनीय हैं ॥४४॥

इतिश्री सनाढ्यवंशोद्भव कविवर श्रीमदखिलानन्दशर्मप्रणीते
सतिलके श्रीचन्द्रमौलिचरिते महाकाव्ये
दीक्षाग्रहणं नाम-तृतीयः सर्गः



## चतुर्थः सर्गः

अथ गुरुः समयोचितमादरा-
न्मुनिवराय वरायतबुद्धये ।
विधिवशादुपदेष्टुमुपस्थितो
द्रुतविलम्बितमेतदभाषत ॥ १ ॥

गत सर्ग में संक्षिप्त रूपसे जिस दीक्षा का दिग्दर्शन कराया गया था उसीका विस्तृत वर्णन इस सर्गमें किया जाता है। दीक्षा ग्रहणके अनन्तर अविनाशी मुनि ने श्रीचन्द्रजी के प्रति जो समयोचित सदुपदेश दिया था उसका यह उपक्रम है॥१

यदिदमद्य जगत्युपलभ्यते
नियमनं भवता भवतापनम् ।
प्रकृतिरत्र विकारमुपागता
मम मते न भवानपुनर्भवः ॥ २ ॥

आप कहते हैं कि—इस समय जगत में जो परिवर्त्तन दीख रहा है वह सब प्रकृति के विकार से ही उद्भूत है, अविनाशी ब्रह्म तो सर्वदा निर्विकार ही रहता है ॥ २ ॥

गुणसमुद्गतकर्मफलोदया
न नियमे नियमेन निवेश्यते ।
यदि बलात्प्रकृतिर्विकृतिस्तदा
जगदिदं विलयं स्वयमेष्यति ॥ ३ ॥

सात्विक, राजस, तामस भेद से अनेक विध कर्म-फलों की देने वाली प्रकृति—यदि बल-पूर्वक वश में नहीं की जायेगी तो जगत् का अवश्यम्भावी प्रलय उपस्थित होगा ॥ ३ ॥

प्रकृतिरात्मवशं पुरुषं बला-
न्नयति सोपि च तामनुसङ्गतः ।

नियमितानि मितानि निषेवते
गुणवशेन फलानि यथोत्तरम् ॥ ४ ॥

प्रकृति-पुरुष को बल-पूर्वक अपने वश में करती है और पुरुष प्रकृति को वश में करता है, यह दोनों आपस में एक दूसरे के वश में रहकर अनेक प्रकार के खेल खेला करते हैं ॥ ४ ॥

जगदिदं सुपथे विनिवेशय-
न्नमरतामरतामपि तां भुवि ।
स्थिरपदां कुरु साधनसंग्रहै-
रमरवन्दित! वन्दितसत्फलाम् ॥ ५ ॥

इस लिये जगत् को सन्मार्ग में लगाकर—हे अमरवन्दित! साधनों के द्वारा अपने अमरत्व को सर्वदा के लिये स्थिर कीजिये ॥ ५ ॥

विलयमद्यगतो भुवि लक्ष्यते
मुनिपरम्परया समुपागतः ।
श्रुतिपथः सुजनोपि च सङ्गतः
स विपदं-विपदन्तक! दृश्यताम् ॥६॥

आज संसार में मुनि परम्परा से प्रवृत्त श्रौत मार्ग सर्वथा लुप्त दीख रहा है और इसके प्रचारक सज्जन भी अनेक विपत्ति में फंसे हुये हैं ॥ ६ ॥

इयमनुत्तमसत्फलदायिनी
श्रुतिलता यदि नैव निषिच्यते ।
रसकला सकलापि तदालयं
प्रतिगतैव वर्तेति विचार्य ॥७॥

उत्तम फलों को देने वाली यह श्रुति-वल्लरी यदि सज्जनों द्वारा इस समय नहीं सींची जायगी तो संसार का समस्त सुख विलुप्त प्राय हो जायगा ॥ ७ ॥

यदि जरा मयि नैव पदं क्रिया-
दहह तर्हि कथंचिदहं बलात् ।

श्रुतिलतां तिलतामभितोगतां
श्रमजलैरुचितां गतिमापयम् ॥८॥

इस समय जरावस्था यदि मुझे न सताती, तो मैं बल पूर्वक शुष्क हुई इ. श्रुति-वल्लरी को अपने श्रम-जल से हरी-भरी करके दिखाता ॥ ८ ॥

परमहं जरया परिवेष्टितः
श्रमवशादतिवृद्धपदंगत. ।
न वितनोमि तनोमि पदं यदि
श्रमपदे गतएव तदा भवात् ॥९॥

परन्तु मैं इस समय जरा जीर्ण तथा अधिक श्रम के कारण अतिवृद्ध होगय हूं, इस कारण परिश्रम नहीं कर सकता—यदि करूं तो जीवन नष्ट होने क भय है ॥ ९ ॥

अहह किं भवता न विलोक्यते
मदवशात्प्रहरन्ति हरन्ति ताम् ।
मुनिजनोपचितां श्रुतिवल्लरी-
मुभयतो भयतोपि विरोधिनः ॥१०॥

आप क्या नहीं देख रहे हैं ?, विरोधीजन अपने गर्व से प्रबल आक्रमणों द्वारा मुनिजन परिपालित श्रुति-वल्लरी पर किस प्रकार निर्दयता पूर्वक प्रहार कर रहे हैं ॥ १० ॥

हरहरेति वदन्नधुना बलात्
प्रहर तेषु विरुद्धदलेष्वलम् ।
न दयिता दयिता विजनेषु ते
विजयितामुपगच्छ यथोचिताम् ॥११॥

इस समय आप विरोधि-वर्ग पर प्रहार कीजिये, यह समय साधुजनोचित दया का नहीं है प्रत्युत विरोधियों पर विजय प्राप्त करने का है ॥ ११ ॥

प्रथमतो नय भेदपथं लयं
भुवि बलेन नु येन कृतं पदम् ।

कुरु तदुत्तरमात्मविजृम्भणं
शिव ! शिवेति शिवेति सदा वदन् ॥१२॥

हे शिवावतार ! सब से प्रथम तो आप हिन्दू जाति में साम्प्रदायिक विरोध को दूर करनेका यत्न कीजिये, जिसने भारतमें अपना निवास स्थान बनाया है। इसके अनन्तर अपने आत्मिक-बल से धर्म का प्रसार कीजिये ॥ १२ ॥

प्रतिपदं विवदन्ति वृथा जना
हरिपदानुरतान्हरभावनाः ।
हरपदानुरतानथ ते सदा
मम मते धिगिमान्धिगिमानपि ॥१३॥

इस समय जहां देखो वहां व्यर्थ ही शैव-वैष्णवों से, और वैष्णव-शैवों से विवाद करते हैं, मेरी अनुमति में यह दोनों प्रशंसा के योग्य नहीं हैं ॥ १३ ॥

हरिरिति प्रवदन्यदि लभ्यते
भुवि विमुक्तिपदं पदमाश्रितैः ।
हरहरेति वदन्नपि लभ्यते
विवदनं वदनं कथमाविशत् ॥१४॥

हरि के स्मरण करने से यदि मुक्ति प्राप्त होती है तो हरहर करने से भी मुक्ति अनायास मिलती है फिर दोनों सम्प्रदायों में विवाद कहां से आया ? ॥ १४ ॥

अहह दुर्दिनमेतदुपस्थितं
विवदनाद्वदनादिह किं ब्रुवे ।
प्रकृतिरेकतया समुपस्थिता
तदुभयत्र मुधा जनवञ्चनाः ॥१५॥

दैव-दुर्विपाक से आज भारतमें वह दिन आगया जबकि हृत्-धातु रूप प्रकृति के एक होने पर भी हरिहरात्मक रूप में मनुष्य व्यर्थ विवाद उठा रहे हैं ॥१५॥

हरिहरौ रविशक्तिगणाधिपा
निगममन्त्रपदैः प्रतिपादिताः ।

प्रथमतोऽथ-मतोऽयमनुग्रहः
स निगमे निगमेक्षणकोविदैः ॥१६॥

वेदज्ञ विद्वानोंने वेदोंमें शक्ति, शिव, सूर्य, गणेश, हरि इन पाँचों देवताओंका पहिले ही से वर्णन किया है इसलिये इस विषय में विवाद उठाना व्यर्थ है ।१६।

निगममन्त्रशतैः प्रतिपादिते
भुवि समर्चनमार्गमुपागते ।
विविधदेवसमादरसत्पथे
न मनुजा मनुजादनरागिणः ॥१७॥

जब अनेक वेद मन्त्रों में भिन्न भिन्न उपासना का समर्थन मिलता है, तब उपासकों को अपने अपने इष्ट का पूजन करना चाहिये, उसको छोड़कर वे व्यर्थ ही आपस में प्राण-सहार क्यों करते है ? ॥ १७ ॥

विविधमांसरसाशनतत्पराः
प्रतिपुर सुरया-सुरयाजिन. ।
विधिविरुद्धपथेपु वितन्वते
गतधियः स्वमतिं निरयाहृताम् ॥१८॥

आजकल जहा देखो वहा सुरा से सुरों का यजन करने वाले तामस-जन मग्न, माम के चक्र में पड़ कर वेद विरुद्ध मार्ग का अवलम्बन कर रह हैं ॥१८॥

निजविनिर्मितपुस्तककल्पनै-
र्जगति तन्त्रविदो निगमानपि ।
जनमते न मतेऽपि विडम्बय-
न्त्यहह दैवविपाकविमोहिताः ॥१९॥

वाम मार्ग प्रतिपादक नवीन नवीन ग्रन्थ लिखकर बहुत से यवन तान्त्रिक वेदादि सद्ग्रन्थों की निन्दा करके मनुष्यों को वैदिक सिद्धान्त से विचलित कर रहे हैं ॥ १९ ॥

द्वयमिदं यदि लोकमते स्थिरं
प्रभवता भवता निजगौरवात् ।

जनपदे विनिवेश्य विधीयते
स्थिरतरं किमतःपरमीप्सितम् ॥२०॥

संसार में प्रचलित इन दो बातों को यदि आप अपने प्रबल पुरुषार्थ से हटाकर श्रौत-मार्ग का स्थिर प्रचार कर सकें तो इससे बढ़कर मेरे लिये अन्य कोई प्रसन्नता का स्थान नहीं है ॥ २० ॥

चरमभागमुपेयुपि जीवने
निगदितास्ति मया निजवासना।
शमरताऽमर ! तामुपजीवयं
स्वसमये निजपौरुषतः स्थिराम् ॥२१॥

हे अमर ! हमने अपने जीवन के अन्तिम भाग में आपके समक्ष यह अपनी प्रबल वासना उपस्थित की है, आप अपने बल से इसको पुनर्जीवन दे कर पूर्ण कर दीजिये ॥ २१ ॥

जगति ते नवजीवनतः स्थितिं
यदि गमिष्यति वेदपथः शिवः।
प्रभवते भवते विबुधोजनः,
स्तुतिपदानि पठिष्यति सर्वतः ॥२२॥

आपके जीवन में यह वैदिक मार्ग यदि आपके परिश्रम से स्थिरता को प्राप्त होगया तो समस्त वेदज्ञ विद्वान् आपका यश-गान करेंगे ॥ २२ ॥

जनपरिस्थितिमत्र भवे भवा-
न्यदि करिष्यति नैतिकजीवनाम् ।
अधमशासनमेष्यति सत्वरं
प्रविलयं विलयन्त्रितभोगिवत् ॥२३॥

आपने अपने पुरुषार्थ से यदि जनता में नैतिक-जीवन का सञ्चार कर दिया तो यवनों का समस्त उत्पात इस समय अन्तर्हित हो जायगा ॥ २३ ॥

शतशएव रघोः कुलसंभवा
यदुपतेरपि विस्मृतपौरुषाः

अनुभवन्ति दशामतिदुःखदां
परिभवेऽरिभवेऽत्र कुतः सुखम् ॥२४॥

यवनों के अत्याचारों से पीड़ित सैकड़ों रघुवंशी और यदुवंशी क्षत्रिय इस समय दुर्दशा का अनुभव कर रहे हैं ॥ २४ ॥

किमधिकं कथयामि भवानिदं
समधिकं परिवेत्ति मदुक्ततः ।
कुरु तथा कृतिमत्र यथा भवे-
दुपरता परतापसमुत्थितिः ॥२५॥

मैं कहां तक वर्त्तमान समय की दुर्दशा का वर्णन करू ? आप स्वयं मुझसे अधिक इस विषय में अनुभव प्राप्त कर चुके हैं, इस लिये ऐसा कार्य कीजिये जिससे इस दुःख का अन्त हो ? ॥२५॥

इदमुदीर्य मुनिम्प्रति सादरं
स भगवानविनाशिमुनिस्तदा ।
विधिवशादनयत्कथनं निजं -
शमवतामवतां हृदये स्थितिम् ॥२६॥

श्रीचन्द्र भगवान् के प्रति इतना कहकर अविनाशी मुनि ने समयोचित अपना कथन यथावसर समाप्त कर दिया ॥ २६ ॥

अवसितिं गमयन्प्रकृतं विधिं
पुनरसावुपविश्य निजासने ।
अनमनो नमनोचितसत्प्रभ-
स्तमिदमाह मुनिं शिवसन्निभम् ॥२७॥

प्रस्तुत कथन का उपसंहार कर अपने आसन पर बैठकर अविनाशी मुनि ने शिव-स्वरूप श्रीचन्द्र जी से फिर कहा ? ॥ २७ ॥

समुपदिश्य भवन्तमवस्थितं
विकसितं मम हृत्कमलं तथा ।

सकमलं कमलं रविमण्डलं

समवलोक्य यथा नभसि स्थितम् ॥२८॥

हे भगवन् ! आपके समक्ष अपना हृद्गत अभिप्राय कहकर मेरा हृदय ऐसा प्रफुल्लित हुआ है जैसा आकाशगत सूर्य को देखकर जलगत कमल का हृदय विकसित होता है ॥ २८ ॥

गुरुवरादधिगत्य यथोचितां

शमधनामधनार्थितभावनाम् ।

मुनिवरोपि निरस्तकुलक्रमो

व्रतमिदं समपूरयदादरात् ॥२९॥

इस प्रकार अविनाशी मुनि से समयोचित उपदेश पाकर श्रीचन्द्र भी अपने कुटुम्ब की समस्त चिन्ताओं को छोड़ अपने मुनिव्रत को पूरा करने के लिये प्रवृत्त हुये ॥ २९ ॥

उभयतो-भयतोपि जनस्थितिं

बहु विलोक्य विपत्तिविमर्दिनीम् ।

सुमनसो निजभक्तजनव्रजे

सुमनसां निचयं ववृषुः शिवम् ॥३०॥

संसार की बिगड़ी हुई परिस्थिति को सुधारने के लिये यह व्रत श्रीचन्द्रमुनि को प्रवृत्त देखकर देवगणों ने भी उस समय उनपर पुष्प-वर्षा की ॥ ३० ॥

एतद्रसान्निगदिदं बुधवन्दनीय-

देवस्य भव्यचरितं पठताञ्जनानाम् ।

भक्तिर्भवे भवतु भूतपतौ भयैक-

त्राणास्पदे हरिविरिञ्चिमहेन्द्रवन्द्ये ॥३१॥

हमने यहां तक बुधवन्द्य श्रीचन्द्र जी का जो वर्णन किया है, उसके पढ़ने वाले सज्जनों का सर्वदा श्रीशङ्कर में अनुराग हो, यही हमारी अभिलाषा है ॥३१॥

अभ्यागतां गुरुपरम्परया पुरस्ता-

दाविष्कृतां सनसनन्दननारदाद्यैः ।

## पञ्चमः सर्गः

अथ वेदविदां भूत्यै निगमागमसम्मतम् ।
अविनाशिमुनिः प्राह-मुनिशब्दार्थनिर्णयम् ॥१॥

इसके अनन्तर वेदज्ञ विद्वानों के लाभार्थ अविनाशी मुनि ने निगमागम सम्मत मुनि-शब्द का विवेचन आरम्भ किया ॥ १ ॥

मुनयो वातरशनाः पिशङ्गा वसतेऽमला ।
इति ऋग्वेदमन्त्रोऽत्र निदर्शनमुपस्थितम् ॥२॥

आपने कहा—"मुनयो वातरशनाः पिशङ्गा वसतेऽमला" इस ऋग्वेद के [१०।१३६।२] मन्त्र में मुनियों का वर्णन प्रत्यक्ष में उपलब्ध होता है ॥ २ ॥

धुनिर्मुनिरिवेत्यत्र मन्त्रे ऋग्वेदसंगते ।
उपमानार्थकत्वेन मुनिशब्दो व्यवस्थितः ॥३॥

"धुनिर्मुनिरिव शर्धस्य जिष्णोः" इस ऋग्वेद के [ ६।५६।८ ] मन्त्र में उपमानार्थ में विद्यमान मुनि-शब्द प्रत्यक्ष में विद्यमान है ॥ ३ ॥

इन्द्रो मुनीनामभवत्सखेति परिदृश्यते ।
ऋग्वेदमन्त्रे प्रत्यक्षं तदाख्यानमुपागतम् ॥४॥

"इन्द्रो मुनीनां सखा" इस ऋग्वेद के (८।१७।१४) मन्त्र में इन्द्र मुनियों का मित्र था, यह भी प्राचीन वैदिक आख्यान मिलता है ॥ ४ ॥

मन्त्रेष्वेतेषु सर्वत्र मुनिशब्दव्यवस्थितौ ।
मुनयो वैदिकाः सिद्धमेतदेव यथोचितम् ॥५॥

पूर्वोक्त तीन मन्त्रों में मुनि शब्द के मिलने पर वैदिक समय में मुनि थे यह बात अनायास सिद्ध होती है ॥ ५ ॥

उपमानार्थके मन्त्रस्थिते मुनिपदे स्फुटम् ।
सञ्ज्ञा कस्यापि सुमुनेरियमस्तीति गम्यते ॥६॥

दीक्षामिमां गुरुवरादधिगत्य मन्ये
श्रीचन्द्रमौलिरभवद्विजयी-जगत्याम् ॥३२॥

नारद आदि मुनियों द्वारा अनुमत तथा गुरु-परम्परा प्राप्त इस उदासीन दीक्षा को प्राप्त कर श्रीचन्द्र जी जगद्विजयी हुये ॥ ३२ ॥

अस्य दिग्विजयभावनावत
पद्धति विजयवर्णनक्रमे।
वर्णितां गुरुपरम्परानुगा
भावुका. पठत रम्यवर्णनाम् ॥३३॥

दिग्विजयोपयोगी साधनों द्वारा सम्पन्न श्रीचन्द्र भगवान् का दिग्विजय तथा उसमें सहयोग देने वाली गुरु-परम्परा का दिव्य चरित्र जिनको देखना हो वे अग्रिम सर्गों का अवलोकन करें ॥ ३३ ॥

अत्र यन्निगदित मया रसा-
दद्भुत यमकसगते पदे. ।
तद्भवत्वतिविनोदकारक
काव्यनिर्मितिकलाहृतात्मनाम् ॥३४॥

इस सर्ग में हमने यमकालङ्कार सहित गुरु शिष्य संवाद को लेकर जो वर्णन प्रस्तुत किया है वह साहित्य सेवी विद्वानों के लिये आनन्द प्रद हो ॥ ३४ ॥

इतिश्री मनाढ्यशोद्भव कविवर श्रीमदखिलानन्द शर्मप्रणीते
मतिलक श्रीचन्द्रमौलिचरिते महाकाव्ये
गुरूपदेशवर्णननाम-चतुर्थ सर्ग

मन्त्र में उपमानार्थक मुनिशब्द के आने पर मुनिशब्द किसी व्यक्ति विशेष का वाचक अवश्य मानना होगा अन्यथा उपमान नहीं बन सकता ॥ ६ ॥

पिशंगवसनास्ते ते मुनयो मननक्षमाः ।
कथ्यन्ते वातरशना येषामिन्द्रोभवत्सखा ॥७॥

इन्द्र जिनका मित्र था वह मुनि वेद में पिशङ्ग ( पीत ) वसन, मननशील और वातरशन कहे जाते हैं ॥ ७ ॥

मुनिर्देवस्य देवस्य सौकृत्याय सखा हितः ।
इति ऋग्वेदमन्त्रेऽपि सखित्वमुपलभ्यते ॥८॥

"मुनिर्देवस्य देवस्य सौकृत्याय सखा हित." इस ऋग्वेद के (१०।१३६।४) मन्त्र में भी मुनियों के साथ इन्द्र का सखित्व मिलता है ॥ ८ ॥

परमेतत्सखित्वं यन्मघोन उपलभ्यते ।
मुनिष्वेव न तन्मन्ये यतिषु व्रतवैरिषु ॥९॥

परन्तु यह जो इन्द्र का सखित्व मन्त्रों में मिलता है वह केवल मुनियों के लिये ही नियत है, यतियों के साथ उसका कोई सम्बन्ध नहीं है ॥ ९ ॥

इन्द्रो जघान त वृत्रं यतीनिव सुदारुणान् ।
इत्याथर्वणमन्त्रोऽत्र प्रत्यक्षं भेदकल्पनः ॥१०॥

"इन्द्रस्तुराषाण्मित्रो वृत्रं यो जघान यतीर्न" इस अथर्ववेद के ( २।५।३ ) मन्त्र में मुनि और यति का भेद विस्पष्ट है । निरुक्त में ( न ) पद उपमानार्थक लिखा है । इन्द्र ने वृत्र को सन्यासियों की तरह मारा यह मान्त्रिक पदों का प्रत्यक्ष अर्थ है ॥ १० ॥

यतिभ्यो धनमादाय भृगुभ्यः समदात्पुरा ।
इन्द्र इत्यपि ऋग्वेदे विस्पष्टमुपलभ्यते ॥११॥

"येना यतिभ्यो भृगवे धने हिते" इस ऋग्वेद के ( ८।६।१८ ) मन्त्र में यह भी आख्यान मिलता है कि इन्द्र ने यतियों से धन छीन कर भृगु नामक ऋषि को दिया है ॥ ११ ॥

कौपीतकोपनिषदि स्थिरमिन्द्रस्य तद्वचः ।
अरुन्मुखान्यतीन्यत्र सोदाच्छालावृकव्रजे ॥१२॥

कौषीतकि ब्राह्मण के–"अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्" (३।१) इस वाक्य में इन्द्र के द्वारा यतियों के माँस का शालावृकों के लिये देना प्रत्यक्ष है ॥ १२ ॥

उभयत्रात्र विद्वद्भिर्वेदमर्मानुवर्तिभिः ।
बलवत्कारणं मृग्यं येनायं भेद आगतः ॥१३॥

इसलिये मुनि और यति इन दोनों शब्दों के इतिहास पर विद्वानों को विचार करना चाहिये कि यह भेद किस कारण से वैदिक साहित्य में आकर प्रविष्ट हुआ है ? ॥ १३ ॥

अतःपरमुदासीनशब्दार्थस्य व्यवस्थितिः ।
वेदादेवात्र विदुषामुपकाराय कथ्यते ॥१४॥

इसके अनन्तर अब उदासीन शब्द के अर्थ पर विचार किया जाता है जो विद्वानों के लिये अत्यन्त मननीय है ॥ १४ ॥

"तस्योदितीति" छान्दोग्यश्रुतौ समुपलभ्यते ।
"उदि" त्येतच्छिवं नाम ब्रह्मणोऽव्यक्तरूपिणः ॥१५॥

"तस्य उत् इति नाम" इस छान्दोग्य श्रुति में [ १।६।७ ] "उत्" यह नाम उस अव्यक्त ब्रह्म का है, जो सूर्य-मण्डल के अन्दर हिरण्मय रूप है ॥ १५ ॥

उपसंवेशनार्थस्य धातोरासेः प्रकल्पितः ।
आसीनशब्दो बहुधा लभ्यते वेदवाङ्मये ॥१६॥

उपवेशनार्थक ( आस ) धातु से आसीन शब्द बनता है, जिसका अधिक प्रयोग वैदिक साहित्य में मिलता है ॥ १६ ॥

---

(१) अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात्सर्व एव सुवर्णः ।

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्य उदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः ( रहितः ) उदेति ह वै सर्वेभ्यः पाप्मभ्यः य एवं वेद ।

[ छान्दोग्य प्रपाठक १ खण्ड २ मन्त्र ७ ]

उदित्येतत्परं ब्रह्म-तत्र ये सुप्रतिष्ठिताः ।
उदासीना निगदितास्तएव निगमागमैः ॥१७॥

"तत्" शब्द से यहाँ पर परब्रह्म का ग्रहण है, उस ब्रह्म में जो प्रतिष्ठित रहते हैं उनका ही नाम उदासीन है ॥ १७ ॥

ब्रह्मसंस्थपदस्यार्थे यथा भवति धारणा ।
उदासीनपदे तद्वत्तस्यैवार्थस्य निश्चितिः ॥१८॥

"ब्रह्मसस्थोऽमृतत्वमेति" इस छान्दोग्य श्रुति में ब्रह्मसस्थ पद का जो अर्थ है वही अर्थ उदासीन पद का भी है ॥ १८ ॥

एकार्थकाविमौशब्दावतोनास्त्यत्र संशयः ।
येषामस्ति यथाकालं ते पठन्तु ऋचाश्चयम् ॥१९॥

ब्रह्म-सस्थ और उदासीन यह दोनों शब्द एकार्थक होने के कारण समानार्थक हैं, इसमें जिनको सन्देह हो वे ऊपर कहे हुये वैदिक मन्त्रों का अवलोकन करें ॥ १९ ॥

प्रवृत्तिमार्गनिरताः केवलं ये भुवस्तले ।
निवृत्तिमार्गविमुखास्तएव मुनिविद्विषः ॥ २० ॥

जो केवल प्रवृत्ति-मार्ग में रत होकर निवृत्ति मार्ग का सर्वथा विरोध करते हैं वे वास्तव में मुनियों के शत्रु हैं ॥ २० ॥

मिथ्या निवृत्तिगर्वेण-येऽलसाः कर्मविद्विषः ।
देवकृत्यं विनिन्दन्ति शत्रवस्ते शचीपतेः ॥२१॥

आलसी होने के कारण कर्म-मार्ग से विमुख जो मनुष्य दम्भ से निवृत्ति मार्ग का ढोंग दिखाकर देवकृत्य की निन्दा करते हैं वे इन्द्र के शत्रु हैं ॥२१॥

निवृत्तिमार्गनिरता अपि ये कर्मयोगिनः ।
मुनयस्ते मता लोके येषामिन्द्रोऽभवत्सखा ॥२२॥

निवृत्ति मार्ग में प्रवृत्त होने पर भी जो सज्जन कर्मयोग का विश्व-रक्षा के लिये समर्थन करते हैं, और वन में रहते हुए आत्म साधन भी करते हैं, इन्द्र उनसे मित्रता रखता है ॥ २२ ॥

अरण्यसंस्थोथमुनिर्बुभूपेदिति वाक्यतः ।
भारते मुनिशब्दोयमुदासीनार्थको मतः ॥२३॥

"अरण्यसंस्थोय मुनिर्बुभूषेत्" यह प्रयोग पर्वोय [ ३७।३९ ] महाभारत का वचन अरण्य-संस्थ होने के कारण उदासीनों को ही मुनि कहता है ॥ २३ ॥

बृहदारण्यकेप्येवं मुनिशब्दः प्रलभ्यते ।
तमेवात्मानमित्यत्र वाक्ये विज्ञैर्विलोक्यताम् ॥२४॥

"तमेवात्मानं विदित्वा मुनिर्भवति" इस बृहदारण्यक (४।४।२२) श्रुति में भी आत्म-ज्ञान के अनन्तर मुनित्व प्राप्त होना सिद्ध है ॥ २४ ॥

उदासीनवदासीनमिति वाक्ये व्यवस्थिते ।
सादृश्यार्थे वतिः सोपि व्यक्तिमाश्रित्य तिष्ठति ॥२५॥

"उदासीनवदासीनम्" इस भगवद्गीता वाक्य में ( ९ । ९ ) सादृश्यार्थक जो वतिप्रत्यय है वह व्यक्ति का अवलम्ब लेकर ही लोक में रहता है ॥ २५ ॥

नास्तिचेत्कोप्युदासीनः कथं तद्वदिति स्मृतिः ।
अस्तिचेत्सिद्धमेवात्र तस्य पूर्वत्वमादृतम् ॥२६॥

यदि उदासीन संज्ञक कोई प्राचीन वैदिक मुनि न माना जावे तो "तद्वत्" प्रयोग नहीं बन सकता, यदि उसका अस्तित्व प्राचीन है तो उसकी प्राचीनता स्वतः सिद्ध है ॥ २६ ॥

न केनाप्युच्यते लोके तवाकाशवदाननम् ।
चन्द्रवन्मुखमित्यादि वाक्यं सर्वैः प्रयुज्यते ॥२७॥

संसार में कोई भी बुद्धिमान् [ आकाशवत्-मुखम् ] ऐसा नहीं कहता है। प्रत्युत [ चन्द्रवन्मुखम् ] ऐसा सब कहते हैं ॥ २७ ॥

उपमानोपमेयत्वभावो वस्तुनि तिष्ठति ।
नावस्तुनि ततः सिद्धमुदासीनपदं स्थिरम् ॥२८॥

संसार में उपमानोपमेय भाव किसी वस्तु को लेकर ही ठहरता है, विना वस्तु के नहीं इस लिये उदासीन पद प्राचीन अवश्य मानना होगा ॥ २८ ॥

भगवद्वाक्यतः सिद्धमुदासीनपदं यदि ।
कः पुनस्तत्र सन्देहः स्थितोद्यापि मनस्विनाम् ॥२९॥

भगवद्गीता में भगवन्मुख से जब उदासीन पद की प्रतिष्ठा हो चुकी, तब उसके विषय में अब विवाद उठाना व्यर्थ है ॥ २९ ॥

अतः परमुदासीनपथस्यास्य प्रवर्तकान् ।
मुनीनहं प्रवक्ष्यामि महाभारतवाक्यतः ॥३०॥

अब यहां पर उदासीन मार्ग प्रवर्त्तक प्राचीन मुनियों का प्रसङ्ग महाभारत के आधार पर कहा जाता है ॥ ३० ॥

[ युग्मम् ]

सनः सनत्सुजातश्च सनकः ससनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥३१॥
सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः ॥३२॥

महाभारत के शान्ति पर्व में नित्यसिद्धज्ञान तथा निवृत्ति मार्ग का आश्रय लेने वाले—सन, सनत्सुजात, सनक, सनन्दन, सनत्कुमार, कपिल, सनातन यह सात ब्रह्मा के मानस पुत्र कहे हैं [ ३४० ७२।७३ ] ॥ ३१—३२ ॥

वैधात्रोयं मुनिगणः स्वभावाद्विषयव्रजे ।
उदासीनः पुरा मार्गमुदासीनमकल्पयत् ॥३३॥
खेलन्तोद्यापि ते बाला मुनयो नयवेदिनः ।
उदासीना इति जनैरुच्यन्ते वेदमानिभिः ॥३४॥

यह वैधात्र मुनिगण स्वभाव ही से विषयों में उदासीन रहने के कारण प्राचीन समय में उदासीन पद्धति के प्रवर्त्तक हुए—जो आज भी बालखिल्य नाम से ऋग्वेद के अन्दर बालखिल्य सूक्त के द्रष्टा माने जाते हैं ॥३३-३४॥

इमानुत्पाद्य तनयान्विधाता सृष्टिकल्पने ।
नियोजितुं प्रववृते परं ते न तथा गताः ॥३५॥

सृष्टि के आरम्भ काल में सन आदि सात मानस पुत्रों को उत्पन्न कर विधाता ने इनसे सृष्टि उत्पन्न करने को कहा, परन्तु इन्होंने पिता का यह प्रस्ताव स्वीकार नहीं किया ॥ ३५ ॥

उदासीनानिमान्वीक्ष्य विधाता सर्जने पुनः ।
सप्तपुत्रान्स्वमनसा सुपुवे सर्जने रतान् ॥३६॥
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मानसा निर्मिता हि ते ॥३७॥

सृष्टि कार्य में उदासीन इन पुत्रों को देखकर विधाता ने सृष्टि-क्रम चलाने के लिये अन्य सात मानस पुत्रों को उत्पन्न किया, जो कि मरीचि, अङ्गिरा, अत्रि पुलस्त्य, पुलह, क्रतु, वसिष्ठ इन नामों से संसार में प्रसिद्ध हुए ॥३६-३७॥

एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्ये च कल्पिताः ॥३८॥

यह सातों पुत्र आज भी वेदज्ञ, प्रवृत्ति मार्ग निरत, मुख्य वेदाचार्य और प्राजापत्य सर्ग के प्रवर्त्तक माने जाते हैं ॥ ३८ ॥

इति भारतपद्याभ्यां शान्तिपर्वणि वर्णिताः ।
सप्तैव मानसाः पुत्राः प्रवृत्तिपथमाश्रिताः ॥३९॥

ऊपर कहे हुये महाभारत के दो पद्यों में जो कि ( शान्तिपर्व अध्याय ३४० पद्य ६९—७० ) में विद्यमान है; सात ही मानस पुत्र प्रवृत्ति मार्ग के पथिक कहे गये हैं ॥ ३९ ॥

द्वाविमौ सुपथौ लोके प्रवृत्तौ सर्जनक्रमे ।
आद्यस्तेषामुदासीनः परो लोकप्रवर्तकः ॥४०॥

सृष्टि के आरम्भ काल से ही संसार में यह दोनों ही मार्ग प्रचलित हुए; जिनमें पहिला उदासीन मार्ग है और दूसरा प्रवृत्ति मार्ग है ॥ ४० ॥

त्रयोन्ये मानसाः पुत्रा मनुप्रोक्ताः पुरातनाः ।
लभ्यन्ते नारदभृगुप्राचेतसमुखाः क्रमात् ॥४१॥

पूर्वोक्त मानस पुत्रों के अतिरिक्त मनुस्मृति में तीन और मानस पुत्रों का वर्णन मिलता है जिनका नाम नारद, भृगु और प्राचेतस है ॥ ४१ ॥

एष्वेको नारदः सर्गादुदासीनतया स्थितः ।
उदासीनपथं भेजे तदन्यौ सर्जनक्रमम् ॥४२॥

इन तीन पुत्रों में से देवर्षि नारद पहिले ही से विषयों से उदासीन र शेष दो सृष्टि मार्ग के प्रवर्तक हुए ॥ ४२ ॥

सनाद्याः सप्त मुनयो नारदश्चाष्टमः पुरा ।
उदासीनपथं लोके तेनुः सर्जनकालतः ॥४३॥

सन आदिक सात पहिले और अष्टम नारद ये सृष्टि के आरम्भ काल से उदासीन धर्म के प्रचारक हुये ॥ ४३ ॥

एभ्यः प्रवृत्तो भुवने मार्ग एषः सनातनः ।
अद्यापि लभ्यते भूमावुदासीनतया स्थिरः ॥४४॥

संसार में इन आठ मुनियों से प्रवृत्त यह सनातन उदासीन धर्म आज भारत में उदासीन नाम से प्रचलित है ॥ ४४ ॥

श्रीमद्भागवतेऽप्येष मार्गः समुपलभ्यते ।
तृतीयस्कन्धमध्यस्थद्वादशध्यायदर्शितः ॥४५॥

यह उदासीन मार्ग श्रीमद्भागवत के तृतीय स्कन्ध में द्वादशाध्याय के अन मी कपिल और देवहूति के सम्वाद में विद्यमान है ॥ ४५ ॥

निवृत्तिमार्गपरतामनुसृत्य विनिर्मितम् ।
तत्रैतत्पद्ययुगलं यदधः परिलिख्यते ॥४६॥

वहां पर निवृत्ति मार्ग का अवलम्ब लेकर श्री व्यासदेव ने दो श्लो लिखे हैं, जो नीचे प्रस्तुत हैं ॥ ४६ ॥

सनकञ्च सनन्दञ्च सनातनमथात्मभूः ।
सनत्कुमारञ्च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥४७॥

तान्वभाषे स्वभूः पुत्रान्प्रजाः सृजत पुत्रकाः ।
ते नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ॥४८॥

वहाँ पर लिखा है कि ब्रह्मा ने—ऊर्ध्वरेता, निष्क्रिय, सनक, सनन्दन सनातन और सनत्कुमार इन चार पुत्रों को उत्पन्न कर उनसे कहा कि तुम प्रज

का सर्जन करो ? परन्तु, केवल वासुदेव-परायण उन पुत्रों ने मोक्ष-मार्गी होने के कारण अपने पिता की आज्ञा का पालन नहीं किया ॥ ४७—४८ ॥

पद्याभ्यामेवमुक्ताभ्यां व्यासदेवेन दर्शितः ।
उदासीनपथः पूर्वं योधना प्रसृतिङ्गतः ॥४६॥

ऊपर कहे दो पद्यों द्वारा व्यासदेव ने पूर्व समय में ही उदासीन मार्ग का समर्थन कर दिया जो आजकल विस्तार को प्राप्त होगया है ॥ ४९ ॥

एतावेव पथौ लोके श्रेयः प्रेय इति स्मृतौ ।
कठोपनिषदिन्यस्तो ययोर्भेदः प्रलभ्यते ॥५०॥

प्रवृत्ति मार्ग और निवृत्ति मार्ग इन दो मार्गों का वर्णन ही कठोपनिषद् में श्रेय और प्रेय के नाम से उपलब्ध होता है ॥ ५० ॥

श्रेयो निवृत्तिमार्गोस्ति य उदासीन उच्यते ।
प्रेयः प्रवृत्तिमार्गोस्ति योयं बहुजनानुगः ॥५१॥

श्रेय निवृत्ति मार्ग है-जिसको उदासीन मार्ग कहते हैं और प्रेय प्रवृत्ति मार्ग है जो सृष्टि क्रम का सचालन करता है ॥ ५१ ॥

निवृत्तिमार्गनिरता मुनयः सनकादयः ।
प्रवृत्तिमार्गनिरता वसिष्ठाद्या महर्षयः ॥५२॥

ससारमें निवृत्ति मार्ग में निरत सनकादि मुनि हुये और प्रवृत्ति मार्ग निरत वसिष्ठादि महर्षि हुये ॥ ५२ ॥

भेदोऽनयोर्महानेष लभ्यते मार्गभेदतः ।
तस्मादिमौ मुनिऋषी भिन्नावेव निसर्गतः ॥५३॥

मार्ग भेद से इन दोनों में बड़ा भारी भेद विद्यमान है इसलिये मुनि और ऋषि स्वभाव से ही भिन्न हैं ये कदापि एक नहीं हो सकते हैं ॥ ५३ ॥

एकरूपेण पश्यन्ति ये नरा भुवि तानृषीन् ।
मुनीगपि न ते विज्ञाः पण्डितम्मन्यमार्गगाः ॥५४॥

जो मनुष्य इनमें भेद न मानकर इन दोनों को एक मानते हैं वे पण्डितम्मन्य कदापि विज्ञ नहीं कहे जा सकते हैं ॥ ५४ ॥

सनाढ्यगौरवादर्शे विस्तरेण मया कृतम् ।
सनकादिमुनिव्रातवर्णनं तत्र वीक्ष्यताम् ॥५५॥

हमने "सनाढ्य गौरवादर्श" नामक निबन्ध में सनकादि मुनियों के विषय मे बहुत कुछ विवेचन किया है वह वहीं पर देखना चाहिये ॥ ५५ ॥

उदासीना. स्वविषये सर्वेपीमे महोदयाः ।
उदासीनपदं प्राप्य रमन्ते बालखिल्यवत् ॥५६॥

उदासीन मार्ग प्रवर्तक सभी सनकादि मुनिगण विषयों से बहिर्मुख होने के कारण आज भी बालखिल्यों के समान सर्वत्र विचरते हैं ॥ ५६ ॥

बाल्यखिल्यपदं वेदे प्राणेष्वेव प्रतिष्ठितम् ।
आबालं तद्गतिर्यस्माल्लभ्यते जन्मभागिषु ॥५७॥

शतपथ ब्राह्मण में [ ८ । २ । ३१ । ] बालखिल्य शब्द सर्वत्र गति होने के कारण प्राणवाचक भी लिखा है ॥ ५७ ॥

प्राणा यथा प्रियतमाः शरीरे देहमानिनाम् ।
उदासीनास्तथा लोके सर्वदा ब्रह्मवादिनाम् ॥५८॥

देहाभिमानी पुरुषों को जिस प्रकार प्राण प्रियतम हैं उसी प्रकार ब्रह्मवादी महात्माओं को उदासीन मुनि प्रिय हैं ॥ ५८ ॥

मनसा कल्पिता यस्मादिमे मुनिवरा. पुरा ।
विधात्रा तत एतेषु न विकारोस्ति योनिजः ॥५९॥

इन सनकादि मुनियों को ब्रह्मा ने मन से उत्पन्न किया इस कारण इनमे योनिज विकार नहीं होता है । योनिज तथा अयोनिज भेद से सृष्टि में द्वैविध्य स्वभाव सिद्ध है ॥ ५९ ॥

विद्यावंशमिमं सर्वे वर्धयन्ति पुरातनम् ।
उदासीना मुनिवरा न वंशं योनिसम्भवम् ॥६०॥

विषयों से उपरत उदासीन मुनिगण प्राचीन विद्या वंश को ही अब तक चलाते आरहे हैं इनमें यौन वंश नहीं चलता है ॥ ६० ॥

मुनिभ्यः प्रसृतो लोके नानाभेदमुपागतः ।
उदासीनपथः प्रायो लभ्यते मुनिमण्डले ॥६१॥

सनकादि मुनियों से प्रवृत्त अनेक भेदों से विभिन्न यह उदासीन मार्ग आज कल प्रायः मुनि मण्डल में मिलता है ॥ ६१ ॥

अतो मुनिव्रतं धार्यं वेदमार्गानुयायिभिः ।
श्रुतिसिद्धः पथो यस्य राजमार्गइव स्थितः ॥६२॥

इसलिये वैदिक मुनियों को इसी मुनि व्रत को धारण करना चाहिये जिस का श्रुति सिद्ध मार्ग राजपथ की तरह सर्वत्र प्रसिद्ध है ॥ ६२ ॥

सोयं तव प्रयत्नेन-नितरां परिवर्द्धितः ।
निवृत्तिमार्गो भुवने वर्धतामुत्तरोत्तरम् ॥६३॥

हमारे परिश्रम से वृद्धि को प्राप्त हुआ यह निवृत्ति मार्ग आपके प्रयत्न से अब बहुत वृद्धि को प्राप्त होगा ॥६३॥

यस्योदयेन सर्वत्र भारते वैदिकः पथः ।
पुनरेष्यति वेगेन निरस्तेतरकापथः ॥६४॥

और इसीके द्वारा समस्त भारत में अन्य कुत्सित मतों का नाश करने वाला वैदिक मार्ग फिर चमकेगा ॥६४॥

यस्यायं भुवनतले महानुदारः
सन्मार्गः प्रसृतिमुपेत्य धर्मभावम् ।
अद्यापि प्रथयति भारतीयमात्रे
सर्वज्ञः स जयति निर्भयो महेशः ॥६५॥

जिसके द्वारा प्रवृत्त बड़ा उदार यह मार्ग आज भी भारतीय-जनों में धर्म मार्ग को विस्तृत कर रहा है, वह निर्भय भगवान् शङ्कर ही वन्दनीय है ॥६५॥

इतिश्री सनाढ्यवंशोद्भव कविवर श्रीमदखिलानन्दशर्मप्रणीते
सतिलके जगद्गुरुश्रीचन्द्रदिग्विजये महाकाव्ये
मुनिमार्गनिरूपणंनाम-पञ्चमः सर्गः

# षष्ठः सर्गः।

अथ प्रसङ्गादविनाशिनामा
मुनिः स्वशिष्यं पुरतो निविष्टम्।
परम्परां बोधयितुं प्रवृत्तो
यथाक्रमं सादरमेवमाह ॥१॥

गत सर्ग में मुनि मार्ग का विवेचन किया गया है, इसके अनन्तर अपने शिष्य के प्रति अविनाशी मुनि-मुनियों की परम्परा का वर्णन करते हुए अपने कथन का उपक्रम इस प्रकार करते हैं ॥ १ ॥

सनातनं सद्गुरुभिः प्रदिष्टं
निवृत्तिमार्गं जगतीतलेऽत्र।
पुनर्नवीकर्तुमनन्तवीर्यः
सनत्कुमारः प्रथमो बभूव ॥२॥

गुरु परम्परा प्राप्त सनातन निवृत्ति मार्ग का इस भारतवर्ष में शैथिल्य दूरकर पुनः नवीन रूप से इसमें जीवन लाने वाले प्रथम सनत्कुमार मुनि हुए ॥ २ ॥

मुनिव्रतोऽयं-मुनिवेषधारी
प्रवृत्तिमार्गं परिहाय दूरे।
निवृत्तिमार्गं भुवने यथाव-
त्ततान निर्वासितलोकमायः ॥३॥

विषयों से उदासीन रहकर आपने प्रवृत्ति मार्ग का निराकरण करते हुए समस्त लोकों में निवृत्ति मार्ग का प्रसार किया ॥ ३ ॥

गुरुर्मुनीनामथ्यमादिसर्गे
सनत्कुमारो निगृहीतमारः।
सनातनेषु स्वमहोदरेषु
ततान दीक्षां परमार्थवीक्षाम् ॥४॥

आदि सर्ग में नेही सनत्कुमार प्रवृत्ति मार्ग में प्रवृत्त अपने सहयोगियों को निवृत्ति मार्ग में लगाकर अपने कर्तव्य का पालन करते थे ॥ ४ ॥

अथ नारदमीक्ष्य तादृशं
तमुदासीनपथे निवेशयन् ।
मुनिरेष यथार्थदर्शनः
प्रथयामास निजोचितं मतम् ॥५॥

आपने नारद मुनि को अपने सिद्धान्त का रहस्य समझाकर अपना अनुयायी बनाया, जिससे सर्वत्र इसका प्रसार होगया ॥ ५ ॥

दीक्षामवाप्य सदृशीं मुनिवंशकेतुः
श्रीनारदो जगति धातृसुतात्सबन्धोः ।
वीणानिनादमुखरीकृतसर्वलोकः
सर्वान्निवृत्तिपथमेव निनाय लोकान् ॥६॥

मुनि मण्डल मण्डन श्री नारद जी महाराज अपने पूर्वज सनत्कुमार जी से निवृत्ति मार्ग की दीक्षा पाकर बड़े प्रसन्न हुए और वीणा का मधुर निनाद सुनाते हुए समस्त मुनि मण्डल में अपने सिद्धान्त का प्रसार करते रहे ॥६ ॥

हारीतगोत्रप्रथितो महात्मा
वाभ्रव्यनामा जगृहेऽथ दीक्षाम् ।
श्रीनारदादेव यथाक्रमेण
सम्वर्धयामास निवृत्तिमार्गम् ॥७॥

इनके अनन्तर हारीत गोत्र में जन्म लेने वाले श्रीवाभ्रव्य मुनि ने नारद जी से उदासीन मार्ग की दीक्षा लेकर ससार में निवृत्ति मार्ग का प्रसार किया ॥ ७ ॥

वाभ्रव्यादधिगतभव्ययोगमार्गः
सम्प्राप्य क्रमवशतोऽत्र धर्मदीक्षाम् ।
श्रीदाल्भ्योप्यनुपदमादरादुपेतं
लोकेस्मिन्मुनिपथमेकमेव तेने ॥८॥

बाभ्रव्य मुनिके अनन्तर उनसे ही योग प्राप्त करके महामुनि दाल्भ्य इस मार्ग के आचार्य हुए जिन्होंने समस्त भूमण्डलमें उदासीन मार्ग चलाकर इसका महत्व विस्तृत किया ॥ ८ ॥

अयमेव दाल्भ्यनामा
मुनिः स्वयोगेन दर्शयामास ।
छान्दोग्योपनिषदि तां
विद्यामन्नप्रवर्धिनीं रम्याम् ॥९॥

इसी दाल्भ्य मुनि ने जिनका छान्दोग्य में दूसरा नाम बकदाल्भ्य मिलता है अपने योग बल से अन्नविद्या का आविष्कार किया जिसका वर्णन छान्दोग्य के प्रथम प्रपाठक में शौवउद्गीथ के नाम से मिलता है ॥ ९ ॥

अयमेवपाणिपात्रो
दिगम्बरोऽश्वेन सङ्गतं पार्श्वे ।
अर्जुनमुत्तरदानै-
र्निरस्तबन्धश्चकार मुनिवर्यः ॥१०॥

येही दिगम्बर दाल्भ्य मुनि अश्वमेधीय यज्ञाश्व की रक्षामें नियुक्त होकर अपने शरण में आए हुए अर्जुन के प्रति उपदेश देकर उसको निरस्तसमस्त बन्धन कर चुके ॥ १० ॥

अथ जयमुनिरस्मिन्भारते दाल्भ्यशिष्यः
स्वकृतिभिरुपकारं भारतस्यास्य चक्रे ।
तदुपकृतिमपीमे भारतीयः प्रसन्ना
जयपदकथनेनाहर्निशं संस्मरुस्ताम् ॥११॥

आपके अनन्तर इस भारत भूमि में आपके शिष्य जयमुनि इस मार्गके प्रचारक हुए जिनका गुण गान आज भी यहां के सत्पुरुष "जय" शब्द के साथ करते हुए आनन्दित होते हैं ॥ ११ ॥

भुवनविदितवृत्तां भारतीमेष वन्द्यो
जयमुनिरुपचारैरर्चयन्वेदतत्त्वम् ।

तदुदितवरदानैराप्य यद्यद्विवव्रे
तदिह मुनिचरित्रग्राहिणः ख्यापयन्ति ॥१२॥

आपने विधिपूर्वक सरस्वती माता की आराधना करके उनसे वर प्राप्त कर जिन गूढ़ वैदिक तत्वों को प्राप्त किया वे वैदिक गूढ़ रहस्य आज मुनि मण्डल में गाये जारहे हैं ॥ १२ ॥

अस्याभवज्जनपदप्रथितः स शिष्यः
सञ्जीवनीं जगति यः समवाप्य विद्याम् ।
मृत्योर्मुखाज्जगदिदं विनिवार्य मन्ये
सञ्जीवनेति निजनाम चकार सार्थम् ॥१३॥

आपके अनन्तर इस सम्प्रदाय के प्रचारक आपके शिष्य सञ्जीवन मुनि हुए जिन्होंने अपने तपोबल से सञ्जीवनी विद्या को प्राप्त कर मृत्यु के मुख से संसार को बचाते हुए अपना नाम अन्वर्थक सिद्ध कर दिया ॥ १३ ॥

कश्यपाय मुनये निजविद्या-
मेष शिष्यपदवीं प्रगताय ।
सम्प्रदाय मुनिराडुपकारं
भारतीयमनुजेषु ततान ॥१४॥

आपने शिष्य पदवी को प्राप्त हुए मुनिवर कश्यप जी को अपनी मृत सञ्जीवनी विद्या देकर संसार का जो उपकार किया वह परिमित अक्षरों में नहीं लिखा जा सकता है ॥ १४ ॥

दष्टुं परीक्षितनृपं रभसाद्व्रजन्तं
मार्गे विलोक्य मुनिरेष विचित्रवीर्यः ।
तं तक्षकं गुरुपरम्परयाऽनुलब्धां
विद्यामिमां कृतिवशात्सफलीचकार ॥१५॥

एक समय की बात है कि राजा परीक्षित को डसने के लिये जिस समय तक्षक सर्प जारहा था उस समय कश्यप मुनि ने राजा को बचाने के लिये बहुत

कुछ प्रयत्न किया जिसका वर्णन महाभारत के आदि पर्व में ४१ और ४२ अध्याय के अन्दर आता है ॥ १५ ॥

सञ्जीवनानन्तरमत्र लोके
श्रीपद्मनामा मुनिराविरासीत् ।
येनातियत्नेन महामहिम्ना
वेगादुदासीनपथः प्रतेने ॥१६॥

सञ्जीवन मुनि के अनन्तर यहां पर श्रीपद्म नामक उदासीनाचार्य प्रकट हुए जिन्होंने बड़े पुरुषार्थ के साथ इस निवृत्ति मार्ग का प्रसार किया ॥ १६ ॥

अयमदान्मुनये नयपण्डितः
प्रथितपाणिनये शिवतुष्टिदम् ।
वरमनुं यदनुग्रहतस्तदा
स रचनामकरोदतिसुन्दरीम् ॥ १७ ॥

आपने ही मुनिवर पाणिनि जी को विनीत रूप में उपस्थित देखकर उनको शैव मन्त्र का उपदेश दिया जिसके प्रभाव से प्रभावित होकर पाणिनि ने अष्टाध्यायी जैसा उत्तम व्याकरण का ग्रन्थ लिखा ॥ १७ ॥

अस्मात्परं स विधिदेव इति प्रसिद्धः
शिष्यो बभूव किल सत्यमुनेः समिद्धः ।
यो वेदमार्गमनघं स्वपरिश्रमेण
तस्तार भूमिवलये बहुभिः प्रयासैः ॥१८॥

पद्म मुनि के अनन्तर इस सम्प्रदाय के आचार्य विधिदेव हुए ये सत्य मुनिके शिष्य थे इन्होंने अपने परिश्रम से संसार में वैदिक तत्वों का बहुत प्रचार किया ॥ १८ ॥

शौनकशिष्यो व्याडिः
कथनादस्यैव सन्मुनेः पूर्वम् ।
संग्रहनामकमेकं
दिव्यं ग्रन्थं विनिर्ममे यत्नात् ॥१९॥

आपके कथन से ही शौनक शिष्य मुनिवर व्याडिने सग्रह नामक एक बड़ा ग्रन्थ निर्माण किया जो व्याकरण में ऊंची श्रेणी का ग्रन्थ माना जाता है ॥१९॥

अस्यैव सन्मुनेराज्ञामुपेत्य धरणीतले ।
व्याडिश्चकार हर्षेण रम्यां विकृतिवल्लरीम् ॥२०॥

आप ही के कथन से उत्साहित होकर व्याडिने एक वेद विषयक विकृतिवल्ली नामक उत्तम ग्रन्थ लिखा जो आज भी वैदिक साहित्य की शोभा बढ़ा रहा है ॥२०॥

गोदावरीतीरसमाश्रितोयं
स त्र्यम्बकेशं जगति प्रसिद्धम् ।
आराधयन्नेकमनाः स्वकालं
तत्रैव चिक्षेप समाधियोगैः ॥२१॥

सत्य मुनि के शिष्य ये विधिदेव जो गोदावरी के तट पर त्र्यम्बकेश्वर महादेव के पास रह कर शिव जी की आराधना में ही अपना समस्त जीवन व्यतीत करते थे ॥ २१ ॥

अतःपरं प्रादुरभूद्धरित्र्यां
मुनिप्रकाण्डः श्रुतिसिद्धनामा ।
यमाप्य लोकेषु बभूव सिद्धा
श्रुतिः समस्तार्थनिबोधयित्री ॥२२॥

आपके अनन्तर इस मार्ग के प्रचारक मुनिवर्य श्रुति सिद्ध जी हुए जिनको पाकर समस्तार्थ प्रकाशक श्रुति मार्ग सब प्रकार से सिद्ध हुआ ॥ २२ ॥

अयं मुनिर्वेदविवेचनार्हं
विनिर्ममे वैदिककोषमेकम् ।
निघण्टुनाम्ना निगमप्रवीणा
वदन्ति यं भूतलमात्रकोषम् ॥२३॥

आपने वैदिक शब्दों का प्रसङ्ग बतलाने वाला निघण्टु नामक एक कोष लिखा जो आज कल वेदज्ञ विद्वानों को बहुत आश्रय देता है ॥ २३ ॥

एतत्सखित्वेन निवृत्तशङ्को
यास्को मुनिस्तं रचयाम्बभूव ।
ग्रन्थं निरुक्ताभिधमादरेण
यो वेदकोपस्य बभूव गुप्तिः ॥२४॥

आपके समकालीन निरुक्तकार यास्कमुनि ने भी मित्र होने के कारण आपके बनाये हुए निघण्टु पर निरुक्त नामक भाष्य लिखा जो आज भी वैदिक शब्दों का रक्षक माना जाता है ॥ २४ ॥

अनेन मुनिना पुरा निगममार्गमातन्वता
बहुत्र निजयत्नतो निगममन्दिरस्थापना ।
व्यधायि तदनु प्रथां निगमपूजनस्याप्यसौ.
ततान भुवने यथा भवतु वेदसम्पूजनम् ॥२५॥

आपने अपने समय में वेदों का मान बढ़ाने के लिये भारत में बहुत से वैदिक मन्दिरों की स्थापना की जिनमें आपने वैदिक ग्रन्थों के पूजन की प्रथा प्रारम्भ कर अविद्या का उच्छेद कर दिया ॥ २५ ॥

यथा जगति पूज्यते गुरुरहर्निशं मानवै-
स्तथा निगमपूजनं कुरुत वेदसंरक्षकाः ।
स्तवैः स्तुवत देववत्प्रणमत प्रपन्नार्तिहं
यथाविधि गुरोः पदं नयत साधुनीराजनम् ॥२६॥

आपने अपने शिष्यों से कहा कि जिस प्रकार मनुष्य अपने गुरु की पूजा करते हैं उसी प्रकार आप लोग वेदों की पूजा करें उनकी स्तुति करें उनको प्रणाम और उनही को गुरु मानकर उनकी आर्ति करें ॥ २६ ॥

एवं समागतजनानुपदिश्य भूयः
श्रौतम्पथं मुनिरयं निगमैकपक्षः ।
सर्वत्र भूमिवलये निगमोक्तधर्मं
विस्तार्य विस्तृतिमवाप गुणैरुदारैः ॥२७॥

इस प्रकार अपने समीप में आए हुए मनुष्यों को उपदेश देकर आपने समस्त भारत में वैदिक मार्ग का प्रचार करते २ वेदों की रक्षा में ही अपना समस्त जीवन व्यतीत किया ॥ २७ ॥

अतःपरं भारतभूमिभागे
समाजगाम प्रथितस्वभावः ।
हिरण्यकेशस्य मुनेः स शिष्यो
मुनिः सुवेशो भगवत्प्रसादात् ॥२८॥

आपके अनन्तर इस उदासीन मार्ग के प्रचारक हिरण्यकेश नामक मुनि के शिष्य सुवेश मुनि हुए इनका वेश संसार में सबसे निराला था ॥ २८ ॥

वेषं विलोकयितुमस्य विचित्रवेषं
नानादिगन्तरगता बहवो मुनीशाः ।
अभ्याययुः समवलोक्य मुनिं सुवेशं
मोदेन पूर्णमनसो बहमाभ्यनन्दन् ॥२९॥

आपके विचित्र वेष को देखने के लिये भारत के समस्त मुनिजन अपने २ देशों से आपके पास पहुंचे साथ ही आपको देखकर अपने २ मन में प्रसन्न हुए और आपकी प्रसंशा करने लगे ॥ २९ ॥

अस्यावदातचरितस्य मुनेर्बभूव
काले क्रमान्मगधदेशभुवः स भूपः
यः पुष्पमित्रतनयो भृतराज्यभारः
श्रीबिम्बसारइति नाम चकार सार्थम् ॥३०॥

आपके समय में भारतवर्ष का प्रधान राजा मगध देशीय पुष्पमित्र का ज्येष्ठ पुत्र बिम्बसार हुआ जिसने अच्छे प्रकार राज्य करते हुए अपने नाम को सर्वत्र प्रसिद्ध किया ॥ ३० ॥

काले गते स मगधाधिपतिः समुद्र-
तीरादिमं मुनिवरं निजराजधानीम् ।

आनीय तस्य पदयोस्तमजातशत्रुं
पुत्रं निजं प्रमुदितो विनयान्न्यधत्त ॥३१॥

कुछ दिनों के अनन्तर मगधेश्वर बिम्बसार राजा ने समुद्रतट से सुवेश मुनि को अपनी राजधानी में बुलाकर अपने पुत्र अजातशत्रु को उनके लिये भेंट किया ॥ ३१ ॥

उदासीनदीक्षामयं सम्प्रदाय
प्रकर्षेण तस्मै भुवः शामकाय ।
निजं धर्मतत्वं पुनः सन्निबोध्य-
प्रकामं मुदाऽऽनन्दलीलामपश्यत् ॥३२॥

आपने भी भेंट में आए हुए अजातशत्रु को अपना शिष्य बनाकर उसके द्वारा सर्वत्र उदासीन धर्म का प्रचार कराया और आप ब्रह्मानन्द में सर्वदा मग्न रहे ॥ ३२ ॥

लोकपालमुनेः शिष्यः सुयत्नो नाम तत्परः ।
उदासीनपथं लोके वर्धयामास सत्वरः ॥३३॥

आपके अनन्तर इस अवधूत गद्दी पर लोकपाल मुनि के शिष्य सुयत्न मुनि आसीन हुए जिन्होंने उदासीन धर्म का बहुत प्रचार किया ॥ ३३ ॥

अनेन मुनिना धर्मप्रचाराय निजेच्छया ।
मण्डलं मुनिसाधूनां यत्र तत्र प्रवर्तितम् ॥३४॥

आपने अपने सिद्धान्त का प्रचार करने के लिये बौद्ध समय में मुनियों के अनेक मण्डल बनाये जो इधर उधर जाकर वैदिक धर्म का प्रचार करते थे ॥ ३४ ॥

अस्यैव मुनिवर्यस्य समये मगधाधिपः ।
चन्द्रगुप्तो नरपतिः शशास पृथिवीमिमाम् ॥३५॥

आपके ही समय में मगध देश का सम्राट् चन्द्रगुप्त हुआ जिसने समस्त पृथ्वी पर अपना अधिकार स्थापित करके उस समय का शासन चलाया ॥ ३५ ॥

अस्मिन्नस्तमिते देवे सुषेणमुनिराप्तवान् ।
पदमस्य यतः सोभूदस्य शिष्यः प्रतापवान् ॥३६॥

आपके अनन्तर इस मार्ग के अधिनायक आपके शिष्य सुषेण मुनि हुए जो उस समय के मुनि मण्डल में बहुत प्रसिद्धि प्राप्त कर चुके थे ॥ ३६ ॥

शिष्यतामस्य सम्प्राप्तश्चन्द्रगुप्तो महीपतिः ।
वैदिकं धर्ममातेने भारते भास्तप्रियः ॥३७॥

आपने उस समय के सम्राट् चन्द्रगुप्त को अपना शिष्य बनाकर उसके द्वारा भारत में वैदिक धर्म का प्रचार कराया ॥ ३७ ॥

शिष्यः सुयत्नस्य मुनेः परस्ता-
द्बभूव लोके सुनयो मुनीशः ।
यो ब्रह्मभूयं प्रगते सुषेणे
वृतो मुनीन्द्रैर्निजमण्डलेशः ॥३८॥

आपके अनन्तर सुयत्न मुनि के प्रियशिष्य सुनय मुनि-इस गद्दी के अधिनायक हुये जोकि सुषेण मुनि के ब्रह्मलीन होने पर—अनेक मुनियों द्वारा मण्डलेश्वर चुने गये ॥३८॥

असौ महात्मा सुनयो जगत्यां
स्वमण्डलैर्धर्मपथं प्रसार्य ।
समेत्य काश्मीरभुवं तदन्ते
समाधिलीनोऽभवदात्मनिष्ठः ॥३९॥

आपने अपने मण्डलों के द्वारा भारत भूमि में निवृत्ति मार्ग को फैलाकर अन्त में काश्मीर में जाकर-आत्म चिन्तन करते २ समाधि प्राप्त की ॥३९॥

अस्मात्परं समभवन्मुनिमण्डलेशः
श्रीमाननन्तमहिमोऽभयनामधेयः ।
यो धर्मवर्धनसुतं शरणं प्रपन्नं
दृष्ट्वा तदीयजनकाय दृशं समादात् ॥४०॥

आपके अनन्तर उदासीन मार्ग के अध्यक्ष श्रीमान् अभय मुनि हुये-जिन्होंने अपने शरण में आये हुये धर्मवर्द्धन के पुत्र को देखकर उसके पिता के लिये दृष्टि-दान दिया । धर्मवर्धन महाराजा अशोक का पुत्र था । इसीका दूसरा नाम कुनाल

था। इसकी दोनों आंखें नष्ट हो गई थी। जलोक नामक इनके पुत्र ने अभय मुनि से अपने पिता को आंखें दिलवाईं, यह घटना ऐतिहासिक है ॥४०॥

अन्धः कुनालनृपतिर्दृशमाप्य देवा-
दस्मान्मुनेरभयतः परिहाय बौद्धम्।
मार्गं दधार हृदये निगमोक्तमार्ग
वीरस्ततान यलवद्धिषणः स्वधर्मम् ॥४१॥

महाराजा अशोक का अन्धपुत्र धर्मवर्द्धन अपने पुत्र जलोक की प्रार्थना से प्रसन्न हुये अभयमुनि से दुबारा नेत्र प्राप्तकर बौद्धमत से अलग हो वैदिक सिद्धान्तों पर दृढ़ विश्वास करके सनातन धर्म का पालन करने वाला बन गया। यह घटना भी ऐतिह्यसिद्ध है ॥४१॥

एतस्मात्परतो मुनेः समभवल्लोके सतामग्रणी
रोचिष्णुर्मुनिराडनन्तमहिमः शिष्योऽभयस्य क्रमात्।
यः शुङ्गान्वयजं नृपं निजतपोयोगेन वश्यं बलात्-
कृत्वा पाटलिपुत्रनाम्नि नगरे यज्ञं ततान द्रुतम् ॥४२॥

आपके अनन्तर आपके शिष्य रोचिष्णु मुनि इस गद्दी के अधिकारी हुए जिन्होंने शुङ्ग वंशीय राजा पुष्पमित्र को अपने योगबल से वश में करके उनके पाटलिपुत्र में एक अश्वमेध यज्ञ कराया जिसका उल्लेख भाष्यकार ने [ इहपुष्पमित्र याजयामः ] इन शब्दों में किया है ॥४२॥

अतःपरं चन्द्रमुनिर्मनस्वी
समेत्य दीक्षां सुतपोभिधानात्।
मुनेः स्वधर्मं गुरुणोपदिष्टं
ततान लोके तपसः प्रभावात् ॥४३॥

आपके अनन्तर इस उदासीन मार्ग के सञ्चालक सुतपा मुनि के शिष्य चन्द्र मुनि हुये जिन्होंने अपने गुरुदेव से प्राप्त रहस्य को सर्वत्र फैलाकर अपने कर्तव्य का पालन किया ॥४३॥

स विक्रमादित्यनृपं महात्मा
तपोबलेन स्ववशे चकार ।
सत्रापि तस्मादुपलब्धदीक्षो
द्रुतं व्रतेने निगमोक्तधर्मम् ॥४४॥

आपने अपने योगबल से उस समय के चक्रवर्ती सम्राट् विक्रमादित्य को अपने वशमें किया-जिसके द्वारा समस्त भारत में वैदिक धर्म का प्रचार हुआ ॥४४॥

कालिदासकविरस्य भूपते-
रन्तरङ्गसचिवोभवत्तदा ।
येन काव्यरचनावशात्कृतं
विस्तृतं भुवि यशोस्य भूपतेः ॥४५॥

राजाविक्रमादित्य के अन्तरङ्ग सचिव महाकवि कालिदास जी थे-जिन्होंने उनके राज्य में रहकर-अनेक काव्यों द्वारा राजाविक्रमादित्य का यश दिगन्त व्यापी कर दिया ॥४५॥

अतःपरमभूदत्र महेशमुनिरागतः ।
जितानन्दमुनेः शिष्यो दक्षिणापथतः क्रमात् ॥४६

इसके अनन्तर जितानन्द मुनि के शिष्य दाक्षिणात्य महेश मुनि जी-इस अवधूत सिंहासन के उत्तराधिकारी चुने गए, जो दक्षिण से उत्तर की ओर यात्रा करते हुये मगधदेश में पहुँचे ॥४६॥

स राजगृहमागत्य मगधान्तःप्रतिष्ठितम् ।
समुद्रगुप्तनामानं राजानं वशमानयत् ॥४७॥

आपने मगध देश में राजगृह के अन्दर कुछ दिन निवास कर समुद्र गुप्त नामक यहां के राजाको वश में करके उनके द्वारा अपना कार्य सम्पादन किया ॥४७॥

चन्द्रगुप्तसुतः सोयं नृपो मुनिवराज्ञया ।
अश्वमेधं महायज्ञं चकार मगधव्रजे ॥४८॥

आपके आदेश से चन्द्रगुप्त के पुत्र समुद्रगुप्त ने-मगध प्रान्त में एक अश्वमेध यज्ञ किया, जिसका प्रभाव दूर तक फैल गया ॥४८॥

एवमेष महामान्यो मुनिर्लक्ष्यत्रयं गुरोः ।
उदासीनस्य विधिवत्पूरयामास हर्षितः ॥४६॥

आपने अपने गुरुवर जितानन्द मुनि के तीन लक्ष्य पूरे किये जिनमें पहिला लक्ष्य नैतिक ऐकमत्य था दूसरा यज्ञों का प्रचार था तीसरा अयोध्या में रह कर उदासीन मार्ग का प्रचार करना था इन तीनों लक्ष्यों को आपने अपने परिश्रम से पूरा कर दिया ॥४९॥

अस्मादप्यपरः स शोभनमुनिर्देवेन गत्वा जवा-
द्राजस्थानमनन्तपुण्यनिलयं तत्रापि दिव्यं मुनिम् ।
हारीतं तमनुप्रबोध्य च निजं भावं यथावत्पुन-
स्तेने योगविजृम्भितेन भुवने शार्दूलविक्रीडितम् ॥५०॥

आपके अनन्तर शोभन मुनि उदासीन मार्ग के प्रचारक हुये आप उत्तर भारत से राजस्थान की ओर चलकर हारीत मुनि के आश्रम पर पहुँचे वहाँ जाकर आपने अपना अभिप्राय हारीत से कहकर समस्त राजस्थान अपने वश में किया ॥५०॥

अयं राजस्थानान्मुनिवर उपेत्य द्विजवरो
यथावद्गङ्गायास्तटभुवि समृद्धं पुरवरम् ।
उदासीनं धर्मं निजममुपदेशैः प्रतिदिनं
प्रतन्वन्नापेदे गतिमनुपमेयां शिखरिणीम् ॥५१॥

शोभन मुनि के ब्रह्म लीन होने पर हारीत मुनि राजस्थान से गंगातट पर कन्नौज आये। यहां आकर आपने उदासीन मार्ग का उपदेश देते हुए अपने मार्ग को बहुत उच्चशिखर पर पहुचा दिया ॥५१॥

अत.परं स दक्षिणामनुव्रजन्दिशं मुनि-
र्महानदीतटस्थितं पुरं समेत्य तद्भवम् ।
कुमारिलं महामतिं विलोक्य भव्यलक्षणं
निबोधयाम्बभूव हृद्गतं सुपञ्चचामरम् ॥५२॥

वहां से हारीत मुनि दक्षिण की ओर महानदी तट पर अवस्थित जयमङ्गल नामक ग्राम में पहुंचे और पहुँचकर आपने यहां पर कुमारिलभट्ट को वैदिक मार्ग का रहस्य बताकर अपने धर्म का पञ्चचामर की तरह प्रगतिशील बना दिया ॥५२॥

एवं लोके निजमतिबलाद्वैदिकं भव्यमार्गं
हारीतोयं मुनिजनवरो वर्धयन्नादरेण ।
देशे देशे भ्रमणवशतो मानवानां प्रवृत्तिं
मन्दाक्रान्तामपि गुणवतीं योगवेगाच्चकार ॥५३॥

इस प्रकार हारीत मुनि ने अपने परिश्रम से लोक में वैदिक धर्म का प्रचार कर प्रत्येक देश में भ्रमण करते हुये मनुष्यों को धर्म मार्ग पर चलता देखकर अपना श्रम सफल माना ॥५३॥

अस्मात्परं जसलमेर भवः प्रतापी
लोकप्रियो मुनिरभूद्भुवने वलक्षः ।
सामप्रियान्मुनिवरादधिगत्य दीक्षां
यः पुष्करे जगति दुष्करमन्वतप्त ॥५४॥

आपके अनन्तर इस सम्प्रदाय के प्रधान पुरुष लोकप्रिय मुनि हुये। आप का जन्म राजस्थान के अन्दर जैसलमेर में हुआ। आपने पुष्कर क्षेत्र में उदासीन दीक्षा ग्रहण की और वहीं घोर तप करने में तत्पर रहे ॥५४॥

अस्य प्रख्यातकीर्तेः प्रखरतरमतिः कः कविर्लोकमध्ये
निश्वत्राणे समर्थं विमलगुणगणं वक्तुमीहां विदध्यात् ।
वेदव्याख्यानदक्षः क्षपितकलिमलो योगमार्गप्रतिष्ठो
यः सौजन्यैकमूर्तिः प्रतिपुरमकरोत् स्रग्धरां वेदवीथीम् ॥५५

ख्यातनामा स्वनामधन्य लोकप्रिय मुनि का पूर्णरूप से वर्णन करना कवियों की शक्ति से बाहर है क्योंकि आपने कठिन समय में योगाभ्यास के द्वारा कलिमल को हटाकर वेदवीथी को 'स्रग्धर' अर्थात् पुष्प मालाओं से अलंकृत करदिया ॥५५

यत्कृपा भूतले मानदे मानवे
भावनामुत्तमां सर्वदा शर्मदाम् ।

वर्धयत्यादृता सत्वरं गत्वरी
स्रग्विणी तत्कृते मत्कृतेयं नतिः ॥५६॥

जिस लोकप्रिय मुनि का आदर्शचरित उत्तम मनुष्यों में उत्तम भावनाओं को उत्पन्नकर सर्वदा सुख देने वाली शान्ति को बढ़ाता है उस मुनिराज को पुष्पमाला के साथ हमारा प्रणाम है ॥५६॥

अस्मिन्नेवान्तराले भुवनपरिवृढः सर्वराजन्यमान्यः
पृथ्वीराजः प्रतापी मुनिवरपदयोरागतः शिष्यभावम् ।
यस्य ख्यातिः समस्ते जगति कविवरैः शूरवीरैकवेद्या
भूयो भूयः प्रबन्धैर्बहुभिरभिसिता स्रग्धरेव क्रमेण ॥५७॥

भारत में लोकप्रिय मुनि का जो समय था, उसी समय में राजा पृथ्वीराज का शासन चलता था उसमें उसने लोकप्रिय मुनि की प्रशंसा सुनकर आपका शिष्य होना स्वीकार किया और आपने भी उसे दीक्षा देकर अपना शिष्य बनाया ॥५७॥

एवमेष भुवोभागे लोकप्रियमुनिः कृती ।
विस्तार्य वैदिकं धर्म ब्रह्मभूयं गतोऽभवत् ॥५८॥

इस प्रकार भारत में वैदिक धर्म का डङ्का बजाकर लोकप्रिय मुनि जी ब्रह्मी भाव को प्राप्त हुए ॥५८॥

अस्मात्परं प्रथितकीर्तिरनन्तवीर्यः
स श्वेतकेतुरभवन्मुनिमण्डलस्य ।
संरक्षकः क्षपितपापकथाप्रपञ्चः
सम्वर्द्धनो निगमगीतपथस्य पान्थः ॥५९॥

आपके अनन्तर अनन्त पराक्रम मुनिवर श्वेतकेतु उदासीन मुनि मण्डल के अधिनायक बने जोकि वैदिक मार्ग के प्रचारक तथा योग विषय के अच्छे ज्ञाता हुये ॥५९॥

अस्य प्रचण्डमुनिमण्डलगीतकीर्तेः
पापापनोदनपरस्य गुणैकसिन्धोः ।

मोक्षमार्गमुपदिश्य भूतले
नाम सार्थमकरोन्मखकर्मैः ॥६४॥

आपके अनन्तर इस मार्ग के प्रचारक मुनिराज वीतहव्य हुए, जिन्होंने संसार में मोक्ष-मार्ग का उपदेश देते हुये अपने नामको यज्ञों के द्वारा सार्थक बनाया ॥६४॥

वीतमप्यहह हव्यमादरा-
देष देवनिलयेषु यापयन् ।
सोपसर्गमपि नाम तत्वतो
द्व्यर्थकं विरचयाम्बभूव यः ॥६५॥

यज्ञ-प्रथा के उठ जाने से नष्ट हुये हव्य को पुनः देवगणों के पास यज्ञों के द्वारा पहुचा कर आपने अपना नाम सार्थक किया। [ विशेषेण इत वीत वीतश्चतत् हव्य वीतहव्यम् ] ॥६५॥

अस्मात्परश्च्यवन इत्यभिधामवाप्तः
सर्वोपकारकरणक्षमशालिशीलः ।
मान्यो बभूव जगतामधियो महात्मा
यो वैदिकं पथमुदारतया ततान ॥६६॥

आपके अनन्तर इस उदासीन मञ्च पर च्यवनमुनि जी आकर विराजमान हुये जो हर प्रकार से वैदिक-धर्म का उद्धार करना अपना कर्त्तव्य समझते थे ॥६६॥

विश्वश्रवास्तदपरः समभूदभ्रमिः
पापस्य पापदलने बहुदत्तशक्तिः ।
यस्योत्तमं चरितमद्य महामहिम्नः
प्रायो जनेषु निगदन्ति मुनिप्रधानाः ॥६७॥

आपके अनन्तर इस उदासीन सम्प्रदाय को विश्वश्रवा नामक मुनिराज ने चलाया, जो कि अत्यन्त धर्मनिष्ठ तथा योग क्रिया के आचार्य माने जाते थे ॥६७॥

कस्यास्त वर्णनमलं विदधातु लोके
देवस्य कीर्तिधवलीकृतदिङ्मुखस्य ।

यो धर्मसेतुमवलम्ब्य निजं चरित्रं
नामापि च स्वमजरं भुवने चकार ॥६८॥

आपके अनन्तर इस मुनि मार्ग के संरक्षक मुनिवर धर्मसेतु जो हुए जो धर्म का सेतु पकड़ कर अपने को तथा अपने चरित्र को भी उज्वल बना गये ॥६८॥

आस्थां विहाय निजदेहगतां यथाव-
द्दिव्यं यशोमयवपुः समवाप्य लोके ।
अद्यापि यो मुनिमनःसु वितिष्ठतेत्र
धन्यः सएव सुयशो मुनिरप्रधृष्यः ॥६६॥

आपके अनन्तर इस उदासीन सिद्धान्त को संसार में सुयश मुनि ने प्रसारित किया जो अपने शरीर की भी परवाह न कर अपने यश को ही अपना शरीर मानते थे ॥६९॥

दानार्थकस्य किल रेत्यभिधस्य धातोः
सार्थक्यमर्थनिचयस्य बहुप्रदानैः ।
कुर्वन्नमन्दमतिरत्र ततान कीर्तिं
लक्ष्मीर इत्यभिधया प्रथितः सदेवः ॥७०॥

आपके अनन्तर इस गद्दी पर लक्ष्मीर मुनि आकर आसीन हुये जो दानार्थक रा-धातु को-लक्ष्मी के साथ लगाकर अपने नाम को अन्वर्थक बना गये [ लक्ष्मीं राति ददाति यः स लक्ष्मीरः ] ॥७०॥

धर्मादित्यं समन्तादुदयमुपनयन्नन्धकारं विधुन्व-
न्नानाविघ्नानुदस्यन्परहितनिरतान्बोधयन्नागमेन ।
रक्षोवक्षःसु वज्रं बलवदतिजवं पातयन्नव्ययघोषैः
सत्यं लोके सुमेरुर्जयति मुनिवरः स्त्रग्धरो मेरुरत्र ॥७१॥

आपके अनन्तर उदासीनों की इस गद्दी पर धर्म रूपी सूर्य के उदयाचल-अन्धकार के हटाने वाले, विघ्नों को दूर करने वाले, सज्जनों के जगाने वाले, राक्षसों की छाती-दहलाने वाले सुमेरु मुनि आसीन हुये ॥७१॥

यस्यालोकः प्रकामं मुनिजनकमलव्रातमेकान्तरम्यं
दिव्यालोकप्रदानैरवनिमुपगत. स्फोटयत्यप्रमेयः ।
शोकं कोकव्रजेषु प्रकिरति महसा योलमस्तं प्रगच्छन्
वन्द्यः सर्वैः प्रभाते जगति विजयते भास्करो भव्यमूर्तिः ॥७२॥

आपके अनन्तर इस गद्दी पर भास्कर मुनि आरूढ़ हुये- जो अपने आलोक से मुनि-मण्डल रूप कमलों को खिलाकर-कोकमण्डल में शोक उत्पन्न करते हुये अपने नामको अन्वर्थक बना गये ॥७२॥

भूपाला यस्य नित्यं चरणनतिपराःशासनं शास्तुरुच्चैः
सर्वस्मिन्नेवकाले मुकुटगतमणिश्रेणिभिर्धारयन्तः ।
नामं नामं प्रपन्नाश्चिरतरमनयन्कालमप्राप्तकालं
सोऽनीतोनाम धन्यो मुनिगदितकथ. स्रग्धरः सर्वमान्यः॥७३॥

आपके अनन्तर-उदासीन मार्ग प्रवर्द्धक अतीत मुनि इस गद्दी पर आसीन हुये जिनका कथन समस्त राजालोग बड़े आदर के साथ मानते थे ॥७३॥

भूतं भव्यं भविष्यस्त्रितयमपि तथा यत्र दैवाद्विलीनं
तिष्ठत्येकान्तमौनं जगदिदमखिलं यत्र कालानुपातात् ।
सर्वं यस्मिन्विलीनं हरिहरविधिभि.कल्पितं धर्मतत्त्वं
सोयं वेदाभिधानो गुरुजनगदितो देववन्द्यो मुनीन्द्रः ॥७४॥

आपके अनन्तर उदासीन सिद्धान्त के प्रचारक वेद मुनि इस धरातल पर अवतीर्ण हुये, जो योगबल से त्रिकालदर्शी और पर अद्वैत ब्रह्म के मानने वाले थे ॥७४॥

यस्माद्दीक्षामवाप्य श्रुतिपथमतनोद्धारते भारतेन्दु-
र्यस्मिन्नस्तं प्रयात. खलखलनिकरो धैर्यराशौ मुनीन्द्रे ।
यः श्रीचन्द्रं समेत्य स्वमनसि निहितं पूरयामास सर्वं
सोऽयं लोकेऽविनाशी जयति मुनिगुरुः सर्वदा सर्वमान्यः ॥७५

जिनसे उदासीन धर्म की दीक्षा लेकर श्रीचन्द्र भगवान् भारत में वैदिक मार्ग के बढ़ाने में तत्पर हुये-तथा जिनको देखकर शत्रु वर्ग स्वयं पराजित हुये, साथ

ही जो मुनिवर श्रीचन्द्र जैसे योग्य शिष्य को प्राप्त कर अपने मन की समस्त शुभ कामनायें पूरी कर चुके, वे सर्वमान्य अविनाशी मुनि धन्यवाद के योग्य हैं ॥७५॥

इत्थं यस्य क्रमेण प्रथममभिहिता पूर्वजानां मुनीनां
सर्गारम्भात्प्रवृत्ता जगति बहुविधा सूचिरेषा यथावत् ।
मार्गः सोयं पुराणः सकलजनमनोमोदको मोक्षभाजा-
मेकालम्बः समन्तात्प्रसरतु भुवने सज्जनानां हिताय ॥७६॥

सर्ग के आरम्भ काल से लेकर अब तक यथा क्रम जिनकी सूची ऊपर कही गई है, वे मुनिगण जिस मार्ग के प्रचारक हुये वह उदासीन सम्प्रदाय भारत में सब का कल्याणकारक हो ॥७६॥

यः श्रीचन्द्रो जगत्यां विविधमतकथाजालमेकान्तमस्तं
नीत्वा वेदोक्तधर्मं मुनिजनगदितं वर्धयामास भूयः ।
यस्यालम्बेन मुक्ता मुनिमतगतयो वर्तमानेपि काले
धर्मं तन्वन्ति सन्तः स भवतु भवतां भूतये चन्द्रमौलिः ॥७७॥

जिन्होंने भूतल में अनेक अवैदिक मतों को हटाकर मुनिगण प्रवर्तित एकमात्र वैदिक धर्म को बढ़ाया, साथ ही जिनका अवलम्ब लेकर आज भी सैकड़ों वैदिक मुनि सनातनधर्म की रक्षा करते हुये नजर आते हैं वे श्रीचन्द्र मौलि भगवान्-संसार में सब के कल्याणकारक हों ॥७७॥

कुन्दावदातमहनीयगुणोज्वलानि
लोकोत्तराणि भुवि यस्य मुनेर्मतानि ।
लोके जनानुपदिशन्ति स भारतेन्दुः
श्रीचन्द्रमौलिरभयं दिशतु प्रजाभ्यः ॥७८॥

कुन्द जैसे अवदात गुणों से अलङ्कृत लोकोत्तर जिस मुनिवर के सिद्धान्त-संसार में सज्जनों को धर्म-पथ पर चला रहे हैं वह भारतेन्दु श्रीचन्द्र भगवान् सबको अभय प्रदान करें ॥७८॥

आक्रान्तमार्यविषयं यवनैर्यथाव-
द्योदीधरत्करुणया करुणावतारः ।
वेदोपवेदपरिशीलनदत्तभाव-
श्रीचन्द्रमौलिरमरः स शिवाय भूयात् ॥७८॥

यवनों से आक्रान्त आर्यावर्त को जिन्होंने अपनी करुणा से बचाकर, उसकी हर प्रकार से रक्षा की, वे वेदतत्वज्ञ श्रीचन्द्र भगवान् सबका कल्याण करते हुये अमर हों ॥७९॥

एतावदत्र विशदं चरितं मुनीना-
मत्यादरेण विनिवेद्य यथाक्रमेण ।
सर्गान्तरे गतमतिः कविरेष सर्गं
षष्ठं समापयति तं मुनयः पठन्तु ॥८०॥

इस सर्ग में इतना मुनियों का परम्पराऽऽगत विशदचरित्र लिखा गया है, इस से अगला वृत्तान्त देखने की जिनको इच्छा हो वे अग्रिमसर्ग देखें, इतनी सूचना देकर यह सर्ग समाप्त किया जाता है ॥८०॥

इतिश्री सनाढ्यवंशाद्भव कविवर श्रीमदखिलानन्दशर्मप्रणीते
सतिलक जगद्गुरश्रीचन्द्रदिग्विजय महाकाव्य
मुनिपरम्परावर्णननाम षष्ठ सर्ग



वरुणघाट उत्तर दिशा




VARAN GHAT NORTHERN ELEVATION

Of

SHRI SADHUBELLA TIRATH SUKKUR (SIND)

## सप्तमः सर्गः

अथ दिगन्तरवीक्षणमानसो
मुनिरयं गमने कृतनिश्चयः ।
विधिवशादशृणोन्निजवासभू-
परिसरेऽधिगतं नवपण्डितम् ॥१॥

मुनि परम्परा का श्रवण करने के अनन्तर अनेक देशों के भ्रमण में उत्तचित्त भगवान् श्रीचन्द्र जी ने यहा से चलने का जिस समय निश्चय किया उसी समय दैवयोग से काश्मीर में दिग्विजय करने की इच्छा से आये हुये एक पण्डित का आपने नाम सुना ॥१॥

समधिगत्य तदागमनं पुन-
र्विवदिषां हृदये पुरतः स्थिताम् ।
मुनिवरोऽयममुञ्चदुपस्थित-
क्रमपथं गमनक्रमसङ्गतम् ॥२॥

नाम सुनते ही आपके चित्त में उसके साथ विचार करने की जो इच्छा प्रकट हुई इससे आपने देश भ्रमण की पहिली इच्छा को कुछ दिन के लिये स्थगित कर दिया ॥२॥

अयमतिप्रमदो विजयी महा-
न्प्रतिदिशं विदुषो बहु तर्जयन् ।
विजयकामनया समुपागतः
स्वनगरादिह दिग्विजयक्रमे ॥३॥

इतने ही में काशी के प्रसिद्ध वैतण्डिक सोमनाथ त्रिपाठी प्रत्येक प्रान्त में पण्डितों को विवाद में पराजित करते हुये काश्मीर की राजधानी में यथा-क्रम पहुंचे ॥३॥

अभ्यागमं समधिगत्य निजाधिवासे
काश्मीरदेशजमना बहवो मनुष्याः ।

कौतूहलेन गणशः समयुः समन्ता-
द्दाराणसेयबुधमण्डलमण्डनं तम् ॥४॥

अपने नगर में आपका आगमन सुनकर काश्मीर के अनेक पण्डित व कुतूहल के साथ मण्डली बना बनाकर काशी निवासी सोमनाथ जी के पा पहुचने लगे ॥४॥

सोऽप्यत्र पण्डितदलं बलवत्समीक्ष्य
विज्ञापनेन निजदिग्विजयप्रशस्तिम् ।
विज्ञाप्य तानवददाशु मयासहात्र
कुर्वन्तु शास्त्रविषये विविधं विचारम् ॥५॥

पण्डित सोमनाथ जी ने भी यहा के पण्डित मण्डल को बढा हुआ देखक रक विज्ञापन पत्र के द्वारा अपनी दिग्विजय की प्रशस्ति प्रकाशित करके कहा यहाँ के विद्वानों को चाहिये कि वे चाहे जिस विषय म मेरे साथ विचार कर का उचित प्रबन्ध करें ॥५॥

यः कोपि सर्वविबुधेषु महत्वमत्र-
प्रख्यापयत्यतितरां पुरत. स एव ।
वादाय मय्युपगते प्रकरोतु वादं
यद्यस्ति शक्तिरथवा विजितोस्तु मत्त. ॥६॥

यहा के पण्डितों म जो अपने को सबसे बड़ा पण्डित मानता हो वही हमा समक्ष में आकर हमसे शास्त्रार्थ करे या हमसे पराजय मानकर हमको विजय प लिख दे ॥६॥

इदमस्य निशम्य गर्जितं
बहवः पण्डितमानिनो जनाः ।
दिवसे नभसि प्रतिष्ठितं
ददृशुस्तारकमण्डलं भयात् ॥७॥

इस प्रकार सोमनाथ त्रिपाठी का गर्जन सुनकर बहुत से पण्डितम्मन्य भ से दिन में ही आकाश में तारा-मण्डल देखने लगे ॥७॥

बहवो नगर प्रतिष्ठिताः
प्रथितं तं पुरुषोत्तमाभिधम् ।
जगदुर्वद कोधुना बुधः
श्रियमालिङ्गति वादसम्भवाम् ॥८॥

नगर के बहुत से प्रतिष्ठित पण्डित प० पुरुषोत्तम (काँल) के पास जाकर कहने लगे कि इस शास्त्रार्थ में विजय-श्री किसका आलिङ्गन करेगी यह बताइये ॥८

अयमत्र समागतो वली
विजितानेव विधास्यति द्रुतम् ।
इदमद्य विनिश्चितं मतं
वद कस्को विवदिष्यति स्फुटम् ॥९॥

काशी का यह सोमनाथ त्रिपाठी बड़ा प्रबल पण्डित है उसके समक्ष में हमारा अवश्य पराजय होगा, यह निश्चित बात है, इसलिये इसके साथ विचार करने में आप किसको उपयुक्त समझते हैं ॥९॥

अतिदुर्बलतामपिश्रितः
प्रतिवादी भयदः प्रतीयते ।
यदवध्यभयो निजो भटो
विजयं नैति विवादमध्यगम् ॥१०॥

अपना पण्डित निर्भय होकर जब तक शास्त्रार्थ जीत कर नहीं आता तब तक दूसरे पक्ष का पण्डित कितना ही दुर्बल क्यों न हो ? परन्तु डरावना प्रतीत होता है ॥१०॥

इति चिन्तयति प्रतिष्ठिते
नगरस्थे पुरुषोत्तमे गुरौ ।
मुनिरेप समागतः श्रिया
विमलं कर्तुमिदं भुवस्तलम् ॥११॥

इस प्रकार की चिन्ता में व्यस्त हुये अपने गुरुवर पण्डित पुरुषोत्तम जी को देखकर-अपने आश्रम से भगवान् श्रीचन्द्र जी पहुंचे ॥११॥

अमुमागतमीक्ष्य निर्भयं
मुनिराजं शिवसन्निभं तदा ।
गुरुरस्य जगाद संस्थिता-
न्पुरतो यात शिवं भविष्यति ॥१२॥

शिवस्वरूप शिवावतार श्रीचन्द्रमौलि को देखकर पास में आए हुये पण्डितों के प्रति पुरुषोत्तम जी ने कहा कि अब आप कोई चिन्ता न करें-भगवदिच्छा से सब काम ठीक होगा ॥१२॥

इदमस्य निपीय सूत्तरं
गतवत्सु क्रमशो यदृच्छया ।
विबुधेष्वभिवाद्य सद्गुरुं
मुनिराडेवमुवाच सस्मितम् ॥१३॥

पुरुषोत्तम जी का यह उत्तर सुनकर जब अन्य सब पण्डित चले गये-तब अभिवादन करने के अनन्तर श्रीचन्द्र जी ने गुरु जी से कहा ॥ १३ ॥

भगवन् ! किमिदं भवद्विधै-
र्विबुधैरेवमुदीर्यते भयम् ।
किमिहाद्य भयस्य कारणं
न विजानाम्यहमागतो वनात् ॥१४॥

भगवन् ! आप जैसे विद्वान् किसके भय से इस प्रकार की बात कर रहे हैं इस भय का कारण क्या है ? मैं नहीं जानता हूं क्योंकि मैं अभी वन से यहा पर सीधा आरहा हूँ ॥ १४ ॥

स्वगतं यदि तत्र विद्यते
भवतां तर्हि ममाग्रतोपि तत् ।
विवृतं क्रियतां यथोचितं
प्रविधास्ये तदहं निजोचितम् ॥१५॥

आपके विचार में यदि यह बात छिपाने योग्य न हो तो कृपया आप मुझे भी सुना दीजिये जिससे मैं भी इसके लिये कुछ उचित प्रबन्ध करूं ॥ १५ ॥

एतादृगस्य वचनं विनिपीय सर्वे
पार्श्वस्थिताः समवदन्नधुना त्रिपाठी
कश्चिद्विवादविजयी किल सोमनाथो
वाराणसेय इह तिष्ठति वादभिक्षुः ॥१६॥

इस प्रकार श्रीचन्द्र जी की बात सुन कर गुरु जी ने तो कुछ नहीं कहा परन्तु वहां पर उपस्थित अन्य सज्जनों ने कहा कि आजकल यहाँ पर एक काशी के बड़े विद्वान् शास्त्रार्थ के लिये ठहरे हुए हैं ॥ १६ ॥

अत्रागतेन किल तेन मदोद्धतेन
काश्मीरपण्डितगणेषु निवेशताऽस्ते ।
भीतिर्यया सकलमेव कुलं बुधानां
वैकल्यमापितमिति प्रथितं नगर्याम् ॥१७॥

यहां आकर उन्होंने बड़े गर्व के साथ शास्त्रार्थ की घोषणा निकाल कर यहां के पण्डितों में भय उपस्थित कर दिया है जिससे सब नगर में हलचल मची हुई है ॥१७

विद्यालये किल भविष्यति राजकीये
शास्त्रार्थ इत्यपि विनिश्चितमेव सर्वैः ।
माध्यस्थ्यमत्र स करिष्यति यं वृणीयुः,
सर्वे परस्परविनिश्चयतः प्रसिद्धाः ॥१८॥

यहां के पण्डितों ने राजकीय विद्यालय में उसके साथ शास्त्रार्थ करना निश्चित किया है । जिसमें समस्त पण्डितों द्वारा चुने हुए कोई विद्वान् मध्यस्थ बनेंगे ॥१८॥

प्रामाण्यमागमगतं निगमागतं वा
सर्वं महर्षिमुनिकल्पितमङ्गजातम् ।
स्वीकार्यमित्यपि विनिश्चितकल्पमेव
तेनाधुना निगदितं विजिगीषुणाद्य ॥१९॥

प्रमाण रूप से इस शास्त्रार्थ में उसने वेद, वेदाङ्ग शास्त्र तथा ऋषि मुनि प्रणीत अन्य अनेक ग्रन्थ स्वीकृत किये हैं, जो राजपुस्तकालय में इस समय उपस्थित हैं ॥१९॥

अत्रत्यपण्डितगणाः किल तेन सार्द्धं
वादाय ते गुरुवरं रभसादचिन्वत् ।
मानोन्नता गुरुवरा अपि निश्चयेन
त्वय्यर्पिताखिलभरा इति निर्विवादम् ॥२०॥

यहाँ के विद्वानों ने आपके गुरुवर श्रीपुरुषोत्तम जी को इस शास्त्रार्थ के लिये नियुक्त किया है और महा-मान्य गुरुवर ने यह समस्त भार आपके ऊपर निर्भर कर दिया है ॥ २० ॥

एतन्निशम्य वचनं सहपाठियूनां
मन्दस्मितेन मदयन्मुनिमण्डलानि ।
श्रीचन्द्रमौलिरिदमाह गुरुं प्रणम्य
नेदं विचारसहमस्ति नवीनकार्यम् ॥२१॥

सहपाठियों के मुख से निकली हुई यह बात सुन कर श्रीचन्द्र जी कुछ देर मुस्कराकर प्रणाम पूर्वक अपने गुरु जी से कहने लगे कि यह छोटा सा कार्य इतना महत्व देने योग्य नहीं है ॥ २१ ॥

साधारणेत्र विषये यदिदं महत्वं
विन्यस्तमस्ति तदिदं विफलं मते मे ।
भाति प्रपञ्चमपहाय ततोत्र कश्चि-
त्संयोज्यतां निजकृपाविषयो भवेद्यः ॥२२॥

शास्त्रार्थ रूपी साधारण विषय को लेकर यह जो इतना उसके लिये महत्त्व दिया जा रहा है वह मेरे मन में सर्वथा व्यर्थ है। इसलिये समस्त आडम्बर हटा कर कोई अपना कृपा पात्र शिष्य इसके लिये नियुक्त कर दीजिये ॥ २२ ॥

मत्वं तमुद्धतमिहागतमप्रमेये-
स्तर्कैर्वयं भवदनुग्रहतः प्रमह्य ।

वादे विजित्य भवतः पदयोर्जयश्री-
मालां प्रदातुमभयाः पुरतः स्थिताः स्मः ॥२३॥

आप की कृपा से हम सब आपके शिष्य उस आये हुए उद्दण्ड पण्डित को विवाद में जीतकर विजय श्री को आपके चरणों में लाकर उपस्थित करेंगे ॥ २३ ॥

एतन्निपीय निजशिष्यवचो गुरुस्तं
श्रीचन्द्रमेव विनियोज्य विवादकृत्ये ।
मध्यस्थमत्र विषये नियतं चकार
सद्यो दिवाकरगुरुं गुरुमेव साक्षात् ॥२४॥

इस प्रकार उत्साह भरी श्रीचन्द्र जी की बात सुन कर पण्डित पुरुषोत्तम जी ने श्रीचन्द्र जी को ही शास्त्रार्थ के लिये प्रस्तुत किया और मध्यस्थ पद के लिये बृहस्पति तुल्य पण्डित दिवाकर जी को चुना ॥ २४ ॥

आयोजनं सकलमेतदिह प्रकृत्य
वादाय सज्जमतयः किल सर्व एव ।
तस्थुः प्रतीक्षणपरा नगरैकदेशे
यत्रायमद्य भविता विबुधप्रवादः ॥२५॥

शास्त्रार्थ का इतना आयोजन एकत्र करके नगर के सब पण्डित सन्नद्ध होकर वहाँ पहुंच गये जहां पर आज का शास्त्रार्थ होना निश्चित था ॥ २५ ॥

सज्ञानिह प्रतिभटानवलोक्य सद्यः
काश्मीरपण्डितदलेन समं त्रिपाठी ।
अभ्याययौ झरिति तत्र समस्त गोष्ठी
विद्यालये पुरतएव समागताऽभूत् ॥२६॥

अपने प्रतिवाद के लिये तुले हुए काश्मीर के समस्त पण्डितों को देखकर सोमनाथ त्रिपाठी भी वहां पहुंच गए जहां सब पण्डित पहिले ही से पहुंच चुके थे ॥२६॥

अभ्यागतान्बुधगणानवलोक्य तत्र
सर्वे विशिष्टमतयो नियताः पुरस्तात् ।

सत्कारपूर्वकमुपस्थितपण्डितौघा-
नुच्चासनेषु नियतेष्वनयन्यथावत् ॥२७॥

दोनों दल के विद्वानों को यथा समय आया हुआ देख कर उस समय के प्रबन्धकों ने आदर पूर्वक उनको यथोचित स्थानों में बिठाने का प्रयत्न किया ॥२७॥

अत्यादरेण विनिवेश्य सभैकभागे
विद्वद्वरानिह परत्र च छात्रसङ्घान् ।
मध्यासने कृतपदः पुरुषोत्तमोपि
तत्रेदमाह समयोचितमादरेण ॥२८॥

बड़े आदर के साथ सभा में एक ओर विद्वानों को और दूसरी ओर छात्रों को बिठाकर मध्य भाग में बने हुए उच्च मञ्च पर चढ़कर पण्डित पुरुषोत्तम जी इस प्रकार कहने लगे ॥ २८ ॥

भद्राः ! कृताञ्जलिरयं भवतां पुरस्ता-
देतन्निवेदयति मूर्धनि सर्वमेतत् ।
संगृह्यतां विधिवशादुपनीतमस्ति
यद्यद्यथाविधि फलादिकमादरार्हम् ॥२९॥

महानुभावो ! मैं आप लोगों के समक्ष बद्धाञ्जलि होकर यह निवेदन करता हूँ कि आप लोगों के सत्कारार्थ यहां की जनता ने जो कुछ पत्र पुष्प यहां पर उपस्थित किया है उसको पहिले आप ग्रहण कीजिये ॥ २९ ॥

एतज्जलं चरणयोरवनेजनाय
मालेयमुत्तमसुमा हरिचन्दनन्तत् ।
नानाविधोचितफलप्रकर- समस्तं
पूजार्थमेव भवतामिदमस्ति सज्जम् ॥३०॥

लीजिये यह चरण क्षालन के लिये जल उपस्थित है यह माला और यह चन्दन है साथ ही यह अनेक प्रकार का फलोच्चय आपके अर्पण है यह सब आपके लिये ही एकत्र किया गया है ॥ ३० ॥

एवं निवेदनपरे पुरुषोत्तमे सा
विद्यालये कृतपदा विदुषां समज्या ।
अत्यादरेण तदुपायनवस्तुजातं
वव्रे यदत्र विबुधैः कृतमागतानाम् ॥३१॥

इस प्रकार पुरुषोत्तम जी के निवेदन करने पर विद्यालय में आई हुई समस्त विद्वन्मण्डली बड़े आदर के साथ भेंट में उपस्थित हुए पदार्थों का ग्रहण करने लगी ॥ ३१ ॥

अङ्गीकृते बुधजनैः सदुपायनेऽस्मि-
न्नेकान्तमुन्नतमनाः पुरुषोत्तमः सः ।
कालोचितानि मधुराधरनिर्गतानि
सद्यो निवेदयितुमाह वचांसि भूयः ॥३२॥

विद्वानों के द्वारा उपायन के अङ्गीकृत करने के अनन्तर प्रसन्न चित्त पण्डित पुरुषोत्तम जी ने कुछ समयोचित मधुर वचन कहने के लिये उपक्रम किया ॥ ३२ ॥

अद्याहमस्मि कृतकृत्यतमः प्रकामं
भावत्कपादजलमार्जनतः पवित्रः ।
सर्वोऽप्ययं नगरवासिजनोऽपि धन्यं-
मन्यं समस्तमिह मे कुलमद्य दैवात् ॥३३॥

आपने कहा आज मैं आपके चरणोदक के मार्जन से कृत-कृत्य हो गया हूं और यह सारा नगर तथा नगरवासी नर नारी गण एवं साथ ही हमारा कुल पवित्र हो गया ॥ ३३ ॥

धन्यं दिनं नगरमेतदतीवधन्यं
धन्या सभा तदधिपो बहुधन्यवादः ।
धन्यस्तथाहमपि यद्भवतां गुरुस्ता-
दीदृग्विधं सकलमद्य विलोकयामि ॥ ३४ ॥

आज का दिन धन्य है आपके पधारने से यह श्रीनगर धन्य होगया है आप

सत्कारपूर्वकमुपस्थितपण्डितौघा-
नुच्चासनेषु नियतेष्वनयन्यथावत् ॥२७॥

दोनों दल के विद्वानों को यथा समय आया हुआ देख कर उस समय के प्रबन्धकों ने आदर पूर्वक उनको यथोचित स्थानों में बिठाने का प्रयत्न किया ॥२७॥

अत्यादरेण विनिवेश्य सभैकभागे
विद्वद्वरानिह परत्र च छात्रसङ्घान् ।
मध्यासने कृतपदः पुरुषोत्तमोपि
तत्रेदमाह समयोचितमादरेण ॥२८॥

बड़े आदर के साथ सभा में एक ओर विद्वानों को और दूसरी ओर छात्रों को बिठाकर मध्य भाग में बने हुए उच्च मञ्च पर चढ़कर पण्डित पुरुषोत्तम जी इस प्रकार कहने लगे ॥ २८ ॥

भद्राः ! कृताञ्जलिरयं भवतां पुरस्ता-
देतन्निवेदयति मूर्धनि सर्वमेतत् ।
संगृह्यतां विधिवशादुपनीतमस्ति
यद्यद्यथाविधि फलादिकमादरार्हम् ॥२९॥

महानुभावो ! मैं आप लोगों के समक्ष बद्धाञ्जलि होकर यह निवेदन करता हूँ कि आप लोगों के सत्कारार्थ यहां की जनता ने जो कुछ पत्र पुष्प यहां पर उपस्थित किया है उसको पहिले आप ग्रहण कीजिये ॥ २९ ॥

एतज्जलं चरणयोरवनेजनाय
मालेयमुत्तमसुमा हरिचन्दनन्तत् ।
नानाविधोचितफलप्रकरः समस्तं
पूजार्थमेव भवतामिदमस्ति सज्जम् ॥३०॥

लीजिये यह चरण क्षालन के लिये जल उपस्थित है यह माला और यह चन्दन है साथ ही यह अनेक प्रकार का फलोच्चय आपके अर्पण है यह सब आपके लिये ही एकत्र किया गया है ॥ ३० ॥

एवं निवेदनपरे पुरुषोत्तमे सा
विद्यालये कृतपदा विदुषां समज्या ।
अत्यादरेण तदुपायनवस्तुजातं
यत्रे यदत्र विबुधैः कृतमागतानाम् ॥३१॥

इस प्रकार पुरुषोत्तम जी के निवेदन करने पर विद्यालय में आई हुई समस्त विद्वन्मण्डली बड़े आदर के साथ भेट में उपस्थित हुए पदार्थों का ग्रहण करने लगी ॥ ३१ ॥

अङ्गीकृते बुधजनैः सदुपायनेस्मि-
न्नेकान्तमुन्नतमनाः पुरुषोत्तमः सः ।
कालोचितानि मधुराधरनिर्गतानि
सद्यो निवेदयितुमाह वचांसि भूयः ॥३२॥

विद्वानों के द्वारा उपायन के अङ्गीकृत करने के अनन्तर प्रसन्न चित्त पण्डित पुरुषोत्तम जी ने कुछ समयोचित मधुर वचन कहने के लिये उपक्रम किया ॥ ३२ ॥

अद्याहमस्मि कृतकृत्यतमः प्रकामं
भावत्कपादजलमार्जनतः पवित्रः ।
सर्वोप्ययं नगरवासिजनोपि धन्यं-
मन्यं समस्तमिह मे कुलमद्य दैवात् ॥३३॥

आपने कहा आज मैं आपके चरणोदक के मार्जन से कृत-कृत्य हो गया हूं और यह सारा नगर तथा नगरवासी नर नारी गण एव साथ ही हमारा कुल पवित्र हो गया ॥ ३३ ॥

धन्यं दिनं नगरमेतदतीवधन्यं
धन्या सभा तदधिपो बहुधन्यवादः ।
धन्यस्तथाहमपि यद्भवतां गुरस्ता-
दीदृग्विधं सकलमद्य विलोकयामि ॥ ३४ ॥

आज का दिन धन्य है आपके पधारने से यह श्रीनगर धन्य होगया है आज

की यह सभा और सभा के यह प्रधान धन्य हैं साथ ही इस समस्त आयोजन के देखने से मैं भी अपने को धन्य मानता हूं ॥ ३४ ॥

धन्या जना निजनिजोचितकार्यदक्षा
मध्यस्थतामुपगतो मनुजोतिधन्यः ।
धन्यानुभावपि सपक्षविपक्ष भूतौ
किं किं न धन्यमतिधन्यतमं समस्तम् ॥३५॥

अपने २ कार्य में लगे हुए सब प्रबन्धक धन्य हैं मध्यस्थ होकर विवाद का निर्णय करने वाले पण्डित दिवाकर जी धन्य हैं वादी और प्रतिवादी बनकर उपस्थित हुए दोनों पक्ष धन्य हैं मैं कहां तक कहूं आज सब कुछ धन्यवाद के ही योग्य है ॥ ३५ ॥

नापूजि यैर्जनकपादयुगं यथाव-
न्नाभाजि यैर्गुरुगृहे गुरुपादपद्मम् ।
नासेवि यैर्बुधजनः स्वगृहेषु तेद्य
नैवात्र दृष्टिपथमभ्युपयान्ति लोकाः ॥३६॥

आज इस मण्डल में ऐसा मनुष्य कोई दृष्टि गत नहीं होता है जिसने अपने घर पर अपने पिता माता और गुरु का विधिपूर्वक चरण वन्दन करके उनसे वरदान प्राप्त न किया हो अर्थात् सभी मनुष्य विनीत वेश और सौजन्य पूर्ण हैं ॥ ३६ ॥

पक्षद्वयेपि विलसन्ति मनोज्ञकायाः
कायाब्जरूपपरितर्जितकामदेवाः ।
देवाधिदेवपरिपूजितचारुपादाः
पादारविन्दनुतिमत्र करोमि केषाम् ॥३७॥

दोनों पक्षों में काम की सुन्दरता को नीचे करने वाले सुन्दर शरीर श्री शंकर की उपासना करने वाले सज्जन गण पधारे हुए हैं मैं सर्व प्रथम किसकी प्रसशा करूं यह समझ में नहीं आता है ॥ ३७ ॥

मान्या महोदयभुवो महित प्रभावा
नानादिगन्तविशदीकृतवीर्यसाराः ।

यस्मिन्विवादमहनीयमहे समेताः
सोयं दिशत्वविरतं शिवमागतेभ्यः ॥३८॥

जिस शास्त्रार्थ रूपी महोत्सव में आप जैसे महा-मान्य महोदय महा प्रभाव अनेक देशों में दर्शित विपुल पराक्रम महा पुरुष पधारे हुए हैं यह महोत्सव आगत जनों के लिये कल्याण प्रद हो ॥ ३८ ॥

एवं निवेद्य विरते पुरुषोत्तमेऽत्र
केचित्समागतबुधाः कथनं तदीयम् ।
दिव्यं शशंसुरपरे प्रशशंसुरुच्चै-
रन्ये नवागतबुधा मुमुहुर्निसर्गात् ॥३९॥

इस प्रकार मधुर स्वागत के समाप्त होने पर उपस्थित विद्वानों ने पुरुषोत्तम जी की बहुत प्रसंशा की जो कि—"परस्परं भावयन्तः" वाली नीति का केवल समर्थन मात्र थी ॥ ३९ ॥

इत्थं परस्परकथोपगमे निवृत्ते
मध्यस्थतामुपगतो विनयेन सर्वान् ।
मर्त्यं दिवाकरइवात्र दिवाकरोयं
प्राह प्रसन्नमनसा परिपद्युपेतान् ॥४०॥

दोनों पक्षों के स्वागताचार के अनन्तर सूर्यप्रभ पण्डित दिवाकर जी ने जो कि सभा में मध्यस्थ चुने हुए थे, बड़ी नम्रता के साथ उभय पक्ष के विद्वानों से कहा ॥४०॥

पर्याप्तएव समयोऽभवदद्य तस्मा-
त्प्रस्तूयतां समयसम्मतमेव सर्वैः ।
आधीयतां क्रमवशान्निजपूर्वपक्षः
पश्चात्तदुत्तरपरो भवतु स्वपक्षः ॥४१॥

माननीय विद्वद्गण ! समय पर्याप्त होगया है इस लिये कार्यारम्भ होना चाहिये नियमानुसार पहिले पण्डित गोपनाथ त्रिपाठी अपना पूर्व पक्ष उपस्थित करेंगे जिस का हमारी ओर से उत्तर दिया जायगा ॥ ४१ ॥

वाक्यं दिवाकरगुरोरिदमानिपीय
वाराणसेयविबुधः किल सोमनाथः ।
सम्मर्दयन्मुखजलोमचयं करेण
गर्वोद्धतः स्वमतमेवमुदाजहार ॥४२॥

दिवाकर जी का यह आरम्भिक वक्तव्य सुनकर पण्डित सोमनाथ त्रिपाठी ने अपनी मूंछें मरोड़ते हुए अपना पूर्व पक्ष इस प्रकार उपस्थित किया ॥ ४२ ॥

[ पूर्व पक्ष ]

भगवन्नसदेतदुच्यते
जगदालम्बनमस्य किम्पुनः ।
सदिदं यदि नाशकल्पना
कथमस्य प्रथिता जगत्त्रये ॥४३॥

यह जो प्रतीयमान जगत् है, उसको आप यदि असत् मानते हैं तो वह किसके अवलम्ब से ठहरा हुआ है ( ? ) यदि आपके मत में यह सत् है तो महाप्रलय में इसका नाश क्यों होता है ( ? ) इन दोनों विरुद्ध बातों का आप समन्वय लगाइये ॥ ४३ ॥

असतः सत उद्गमः कथं
श्रुतिवाक्ये गदितो मनीषिभिः ।
न कदापि सतोप्यसत्कथा
समुदेति श्रुतिवाक्यदर्शनात् ॥४४॥

असत् से सत् का उद्भव श्रुतियों में किस प्रकार निणात है (?) और सत् का असद्भाव श्रुतियों ने किस प्रकार माना है ( ? ) ॥४४॥

सदसत्परमस्ति यत्स्वयं
सदिदं ब्रह्म कथं तदा भवेत् ।
असति च्चरणात्मकेपुन-
र्जगतीदं कथमाविशद्वद ॥४५॥

मुनिरेष तदुत्तरक्रमं
प्रथयामास रसेन सस्मितः ॥४६॥

अपने गुरुवर से इस प्रकार का सर्वतोभद्र आदेश सुनकर श्रीचन्द्र जी ने पूर्व पक्ष का जो उत्तर दिया, वह इस प्रकार है:— ॥४९॥

[ उत्तर पक्ष ]

बुधवर्य ! भवद्वचस्तति-
र्न विचारक्षमतां विगाहते ।
निगमेषु यतः प्रलभ्यते
सदसद्वस्तुविवेचनक्रमः ॥५०॥

विद्वन् ! आपने सभा में जो पूर्व पक्ष उपस्थित किया है, वह मेरी अनुमति में विचार-क्षम नहीं है। क्योंकि वेदों में सदसद्वस्तुओं का विवेचन क्रम विस्पष्ट वर्णित है ॥५०॥

असदित्यभिधीयते बुधै-
र्जगदव्यक्ततयोपलक्षितम् ।
निगमागमवाक्यदर्शना-
त्सदिति व्यक्ततया व्यवस्थितम् ॥५१॥

विद्वान् अव्यक्त भाव से अवस्थित जगत् को असत् और व्यक्त भाव से अवस्थित जगत् को सत् कहते हैं। आपका पूर्व पक्ष व्यक्ताव्यक्त भाव में समाप्त होता है, जगत् से उसका कोई सम्बन्ध नहीं है। इस लिये भाव पर पहिले विचार कीजिये ॥५१॥

उभयात्मकमस्ति यन्मनः
श्रुतिवाक्ये ततएव तद्विधा ।
उभयात्मतया व्यवस्थिता
भगवानस्ति न मन्नचाप्यसत् ॥५२॥

जगत् मन के द्वारा कल्पित है, मन को श्रुति वाक्यों में उभयात्मक कहा है। इसी कारण जगत् भी उभयात्मक प्रतीत होता है, भगवान् सदसद्विलक्षण है। इसीलिये सर्वसाक्षी है, उनका जगत् से कोई सम्बन्ध नहीं है ॥५२॥

असतो मनसः समुद्भवं
जगदव्यक्ततयावतिष्ठते ।
मनसः सत उद्भवं तथा
भवति व्यक्तमिति व्यवस्थितिः ॥५३॥

असद्भावापन्न मन से उत्पन्न जगत् असत् और सद्भावापन्न मन से उत्पन्न जगत् सत् कहा जाता है, जगत् के सदसद्विषय में यही व्यवस्थिति पर्याप्त है ॥५३॥

सदसत्परमेकमव्ययं
भगवन्तं समवेत्य सर्वदा ।
प्रकृतिर्गुणवत्यधीश्वरे
प्रतिबिम्बत्वमुपैति निर्गुणे ॥५४॥

ब्रह्म सर्वदा सदसद्विलक्षण इस लिये है कि उसकी कल्पना सदसद्भावापन्न मन से नहीं होती है, अर्थात् वह मनःकल्पित नहीं है। उस ब्रह्म में गुणवती प्रकृति प्रतिबिम्ब भाव से प्रतिबिम्बित है, वस्तुतः नहीं ॥५४॥

विमलः स्फटिकोपलो यथा
निजसान्निध्यगतस्य वस्तुनः ।
प्रतिबिम्बवशेन भूतले
प्रतिभाति भ्रमतोऽन्यतद्विधः ॥५५॥

निर्मल स्फटिकोपल में जिस प्रकार समीप में विद्यमान रक्त पीतादि गुण सम्बद्ध द्रव्य का प्रतिबिम्ब भ्रम से प्रतीत होता है उसी प्रकार ब्रह्म में जगत् का प्रतिबिम्ब भी केवल भ्रम मात्र है ॥५५॥

इदमेव महन्निदर्शनं
सगुणायाः प्रकृतेः परात्परे ।
भगवत्यमले व्यवस्थितं
जगदीशे जगदेकसाक्षिणि ॥५६॥

इसी निदर्शन से परात्पर ब्रह्म में जो जगत् का सम्बन्ध दृष्टिगत होता है, उसकी व्यवस्था लगानी चाहिये यह उत्तर वेदान्त के मतसे आपके लिये उपस्थित है ।५६।

अथवा जगदेतदव्ययं
जलधारावदिह प्रतिष्ठितम् ।
प्रकृतेर्गुणपारवश्यतो
बहुधा भाति नभो यथाघनैः ॥५७॥

यदि आप सांख्य का मत लेकर चलते हैं तो यह जगत् जल धारा के समान सर्वदा किसी न किसी रूप में अवश्य रहता है और प्रकृति की गुणपरवशता से मेघाच्छन्न आकाश की तरह विविध रूप से प्रतीत होता है ॥ ५७ ॥

न लयः प्रकृतेः कदाप्यहो
भवति व्यक्तमुपेत्यदृश्यताम् ।
तमिमं कथयन्ति सूरयो
लयभावं प्रगतं न वस्तुतः ॥५८॥

प्रकृति का अत्यन्ताभाव किसी समय में नहीं होता है केवल उसका कार्य कारण में लीन होने के कारण अदृश्य हो जाता है इसीको कोई विद्वान् प्रलय मानते हैं, वस्तुतः जगत् का अत्यन्ताभाव कदापि नहीं होता है, उसके अत्यन्ताभाव होने पर ईश्वर का ईशन नहीं रहता है ॥ ५८ ॥

सत एव सतः समुद्भवो
भवति व्यक्ततयात्र नाऽसतः ।
नहि कोपि विलोकयत्यहो
बत शृङ्गं नरमूर्ध्नि निःसृतम् ॥५९॥

सद्भावापन्न ब्रह्म से सद्भावापन्न जगत् का आविर्भाव सत्कार्य वाद में परिणत होता है, असत्कार्य वाद में उसका अभ्युपगम नहीं है इसीलिये मनुष्य के शिर पर आजतक किसी ने भी उगता हुआ शृङ्ग नहीं देखा है ॥ ५९ ॥

प्रकृतौ निवसन्ति ये गुणाः
प्रकृतेः कार्यपथेपि ते तथा ।
न विरुद्धगुणोदयः श्रुतो
भुवि कुत्रापि चराचरक्रमे ॥६०॥

जो गुण प्रकृति में रहते हैं वे ही प्रकृति जन्य कार्य में पाये जाते हैं प्रकृति विरुद्ध कार्य कारण भाव चराचर जगत् में कभी भी देखने में नहीं आता है॥६०॥

प्रलये सदसद्विलक्षणो
भगवानेव वितिष्ठतेऽचलः।
न तदा सदिदं नचाप्यस-
ज्जगदाभाति विलीनमीश्वरे ॥६१॥

प्रलय काल में सदसद्विलक्षण एक भगवान् शङ्कर ही अपने रूप में अवस्थित रहते हैं सदसद्भावापन्न यह जगत् उन्हींके अन्दर छिप जाता है। जगद्रूप कार्य का ईश्वर रूप कारण में छिप जाना ही यहां पर प्रलय शब्द से अभिमत है अत्यन्ताभाव नहीं ॥६१॥

सकलोपि विवर्तसम्भवो
यत आविर्भवति स्वयेच्छया।
भज तं शिवमेकमद्वयं
सदसद्भावमपास्य वस्तुजम् ॥६२॥

जिस भगवान् की इच्छा से यह समस्त विवर्तवाद अव्यक्त भाव से व्यक्त भाव में परिणत होता है उस अद्वितीय शङ्कर की आप उपासना कीजिये वस्तुगत सदसद्भाव की उपासना आपके योग्य नहीं है॥ ६२ ॥

इदमत्र मया यथार्थतो
विवृतं सर्वमतोपि यत्परम्।
भवतां हृदये व्यवस्थितं
तदपार्थं वत पिष्टपेषवत् ॥६३॥

आपके समस्त पूर्व पक्षों का शास्त्रानुगत यथार्थ उत्तर इन शब्दों में उपस्थित किया गया है इसके अनन्तर जो आपका और कथन होगा वह केवल पिष्टपेषण मात्र होगा॥ ६३ ॥

इदमस्य मुनेः समुत्तरं
निगमान्तर्गतभावगर्भितम्।

विनिपीय बुधव्रजो जयं
जयघोषैरवदत्पुरोगतः ॥६४॥

इस प्रकार श्रीचन्द्र जी का वेदानुगत उत्तर सुनकर उपस्थित समस्त विद्वन्मण्डली ने जयघोष के साथ आपका जय स्वीकार किया ॥ ६४ ॥

प्रतिवादिनमेनमद्भुतं
स विलोक्य प्रभया समुन्नतम् ।
विजयी विबुधः पराजयं
बहुमेने निजमद्य लज्जितः ॥६५॥

आप जैसे उद्भट प्रतिभा सम्पन्न प्रतिवादी को देखकर वादी पण्डित सोमनाथ त्रिपाठी भी मन में लज्जित होकर अपना पराजय अनुभव करने लगे ॥ ६५ ॥

गुरुरस्य मुनेः पुरः स्थितो
नवहर्षाश्रुविलोलवीक्षणः ।
यमवाप तदाऽतिसम्मदं
न स शक्यो गदितुं पदक्रमैः ॥६६॥

हर्षाश्रु विलोल नेत्र आपके गुरु को आज जो अनिर्वचनीय आनन्द प्राप्त हो रहा था उसका वर्णन करना शब्द शक्ति से बाहिर है ॥ ६६ ॥

सकलोपि बुधव्रजो मुनिं
नरभावं प्रगतं सदाशिवम् ।
हृदये समसंस्त निर्वृतो
विजयश्चास्य जगाद सर्वतः ॥७६॥

सभा में समुपस्थित सभ्य मानव समाज ने श्रीचन्द्र जी का अद्भुत प्रभाव देखकर आपको मनुष्य भावापन्न सदा शिव मानकर सर्वत्र आपका विजय उद्घोषित कर दिया ॥ ६७ ॥

क्व मुनिर्भुवनाब्दलक्षितः
क्व पुनर्भावगभीरमुत्तरम् ।

इदमेव मुहुर्मुहुर्वद-
न्कमलाकान्तबुधो ययौ मुदम् ॥६८॥

चौदह वर्ष की अवस्था वाले कहां श्री चन्द्रमौलि ! और कहां फिर इसी विचार धारा में प्रवृत्त उनको उत्तर देने की शक्ति ! इन परस्पर विरुद्ध दोनों बातों को बार २ दुहराते हुए पण्डित कमलाकान्त जी आनन्द में मग्न हो गए ॥६८॥

अवसानमुपेयुषि क्रमा-
त्समयेपि स्थगितान्यतत्कथः ।
परिपद्भवनाद्विनिर्ययौ
जयघोषैः सहितो जनव्रजः ॥६९॥

शास्त्रार्थ का नियत समय समाप्त होने पर शहर के अन्य गण्य मान्य सज्जन भी अन्य सब कार्यों को अगले दिन के लिये स्थगित कर सभा भवन से जय घोष करते हुए अपने २ घरों को गए ॥ ६९ ॥

मुनिरप्यनुशासनं गुरोरधिगत्य प्रभयाऽनुमङ्गतः ।
वनमाविशदाश्रमोचितं वनरम्यं वनजायतेक्षणः ॥७०॥

इधर अपने गुरुदेव की आज्ञा लेकर भगवान् श्रीचन्द्र भी विशिष्ट प्रभामण्डल से प्रभावित होकर अपने आश्रम के उचित गहर वन में विश्रामोचित पर्णकुटी के अन्दर प्रविष्ट हुए ॥ ७० ॥

एवं निवेद्य विजयोचितभावगर्भ
शास्त्रार्थनिर्णयपरं विविधान्यवृत्तम् ।
वृत्तं तदुत्तरकथामृतदत्तचित्तः
सर्ग समापयदिमं कविरप्रमत्तः ॥७१॥

शास्त्रार्थ के सम्बन्ध में इतना सपक्ष विपक्ष सम्बन्धी वृत्तान्त निवेदन करके अग्रिम प्रसङ्ग में दत्त चित्त कवि ने भी यह सर्ग यहीं पर समाप्त कर दिया ॥७१॥

इतिश्री सनाढ्यवंशोद्भव कविवर श्रीमद्खिलानन्दशर्मप्रणीते
सचित्रे जगद्गुरुश्रीचन्द्रदिग्विजये महाकाव्ये
श्रीचन्द्रमौलिविजयो नाम-सप्तम सर्ग

## अष्टमः सर्गः

अथानुरोधाद्विदुषः सोमनाथस्य धीमतः ।
निश्चितोभूद् द्वितीयेन्हि शास्त्रार्थो हर्षवर्धनः ॥१॥

शास्त्रार्थ के दूसरे दिन पण्डित सोमनाथ जी के अनुरोध से दूसरे शास्त्रार्थ का आयोजन भी बड़ी तय्यारी के साथ हुआ ॥ १ ॥

प्रातरेवातिहर्षेण विद्वज्जनपुरःसरः ।
त्रिपाठी नियतस्थानमाजगाम जयेच्छया ॥२॥

प्रातःकाल होते ही सोमनाथ त्रिपाठी अपने पक्ष के समस्त पण्डितों को लेकर जहां पूर्व शास्त्रार्थ हुआ उसी स्थान पर पहुंचे ॥ २ ॥

गुरोरनुज्ञया तत्र समायातो वनोदरात् ।
श्रीचन्द्रमौलिः स्वगुरोर्ननाम पदपङ्कजम् ॥३॥
अन्यानपि सभास्थानमागतान्विबुधोत्तमान् ।
अभिवाद्य यथान्यायमाससाद भुवस्तले ॥४॥

गुरु जी की आज्ञा पाकर श्रीचन्द्र जी भी अपनी वनगत पर्णकुटी से आकर सब से पूर्व अपने गुरुदेव के चरण छूकर यथाक्रम अन्य उपस्थित विद्वानों को भी शास्त्र मर्यादानुसार प्रणाम कर पृथ्वी पर बैठ गए ॥ ३-४ ॥

समागतमिमं वीक्ष्य श्रीचन्द्रं पुरतः स्थितम् ।
सोमनाथो विश्वनाथं सस्मार हृदयस्थितम् ॥५॥

सभा में श्रीचन्द्र जी को आया हुआ देखकर पण्डित सोमनाथ त्रिपाठी ने हृदय स्थित विश्वनाथ जी का स्मरण किया जिसका रहस्य आगे जाकर खुलेगा ॥ ५ ॥

[ कुलकम् ]

भस्मोद्धूलितसर्वाङ्गं जटामण्डलशोभितम् ।
रुद्राक्षवलयाबद्धजगद्द्योतितकन्धरम् ॥६॥

व्याघ्रचर्मस्थितं दिव्यप्रभाशोभितदिङ्मुखम् ।
समिद्धाग्निविनिक्षिप्तनानाहव्यसमुच्चयम् ॥७॥

तपोवनसमासीनमक्षमालालसत्करम् ।
मेखलाबद्धकौपीनं पीनवक्षोविशोभितम् ॥८॥

ब्रह्मचर्यव्रतधरं विषयेषु पराङ्मुखम् ।
प्रगल्भवचसं धीरं गम्भीरवचनक्रमम् ॥९॥

तृणीकृतजगत्सारं धीरोद्धतगतिक्रमम् ।
कुमारमपि गम्भीरं वीरं रसमिव स्थितम् ॥१०॥

स्मरण के समय भगवान् शङ्कर का स्वरूप विभूति भूषित जटामण्डल शोभित, रुद्राक्ष माला वेष्टित कण्ठ, व्याघ्रचर्म पर आसीन, दिव्यप्रभ, समिद्धाग्नि हुत हव्य, तपोवन स्थित, अक्ष माला लसत्कर, मेखलाबद्ध कौपीन, उन्नत वक्षःस्थल, ब्रह्मचर्य व्रतधर, विषयों से उदासीन, प्रगल्भ वचन, धीर वीर, गम्भीर भावापन्न, तृणी कृत जगत्सार, धीरोद्धत गति क्रम, कुमारावस्था में भी गम्भीर, मूर्तिमान् वीर रस जैसे सन्नद्ध रूप में परिणत था ॥ ६-१० ॥

विजयाशंसया तस्य प्रणत्य पदपङ्कजम् ।
प्रत्यागम्य ददर्शाग्रे तमेव हृदयेशयम् ॥११॥

शास्त्रार्थ में विजय की कामना से इस प्रकार हृद्गत शङ्कर जी को प्रणाम कर जैसे ही पण्डित सोमनाथ जी ने अपने नेत्र खोले वैसे ही उनको प्रत्यक्ष में भी श्रीचन्द्र जी के रूप में शङ्कर का दर्शन हुआ ॥ ११ ॥

उभयत्र समानेन रूपेण समवस्थितम् ।
विलोक्य विश्वनाथं तं विस्मयं समुपागमत् ॥१२॥

भीतर और बाहर दोनों स्थलों में भगवान् का एकसा रूप देखकर सोमनाथ त्रिपाठी के मन में बड़ा आश्चर्य सा होगया ॥ १२ ॥

किमयं पुरतो मेऽद्य विश्वनाथः समागतः ।
श्रीचन्द्रमौलिः किमयं हृदये समधिष्ठितः ॥१३॥

मुनिमिममधिगत्य प्रत्यहं तच्चरित्रं
कठिनतरसमाधिव्यस्तभावाः शशंसुः ॥७६॥

यहां पहुंचकर आपने अनेक प्रसिद्ध प्रसिद्ध सिद्धों से सुना कि पूर्वकाल में यहीं पर आकर श्रीकृष्ण जी ने जो बड़ा घोर तप किया था उसीके प्रभाव से वे सर्वत्र अजेय होगये ॥ ७९ ॥

नरमथ वनभागे तत्र नारायणं द्रा-
गयमुभयमवेत्य स्पष्टरूपेण सद्यः ।
कठिनतरतपोभिः साध्यमत्यन्त मिष्टं
किमपि फलमवाप्य ध्याननिष्ठोऽत्रतस्थे ॥८०॥

यहां पर आपको प्रत्यक्ष रूप में नर और नारायण दोनों का दर्शन हुआ जिससे आपने यही निश्चय किया कि—तप के प्रभाव से संसार में कोई कार्य बाकी नहीं रहता है, इसलिये तप करना ही मनुष्य के लिये श्रेयस्कर है ॥ ८० ॥

परिचरणपराणामत्र नानामुनीनां
वनविहरणवाञ्छाकृष्टचित्तक्रमाणाम् ।
कथनमुरसिकृत्याधोवताराय तस्मा-
दनुपदमयमागादाशु नन्दप्रयागम् ॥८१॥

इस पुण्यक्षेत्र में आपकी परिचर्या के लिये जो मुनिजन रहते थे वे भी आपके साथ साथ वनों में विचरना चाहते थे, इस लिये उनकी आज्ञा को शिरोधार्य समझकर आप यहां से नन्दप्रयाग पहुंचे ॥ ८१ ॥

कृतविविधविचारस्तत्र नानामुनीन्द्रै-
र्मुनिरयमतिपुण्यप्रापि दिव्यप्रवाहम् ।
भृगुमरमधिगत्य प्रस्थितं जन्हुकन्यां
पथि मुहुरनुपश्यन्नाप कर्णप्रयागम् ॥८२॥

यहां पर कुछ दिन ठहर कर अनेक मुनियों के साथ वार्त्तालाप करके अन्त में आप मार्ग में आये हुये अनेक नदियों के प्रवाहों को गङ्गाजी में गिरता हुआ देखते देखते कर्णप्रयाग पहुंचे ॥ ८२ ॥

अवतरणपथस्थं प्राप्य देवप्रयागं
क्रमगमनपरोयं वीक्ष्य विष्णुप्रयागम् ।
तदनु परमपुण्यं दिव्यरुद्रप्रयागं
नयनफलमनल्पं भाग्ययोगादवाप्त ॥८३॥

यहां से उतरते समय आपने सब से पहिले देवप्रयाग, उसके अनन्तर गमन क्रम से क्रम प्राप्त विष्णु प्रयाग, उसके अनन्तर मार्गावस्थित रुद्रप्रयाग देखा। इन सबकी शोभा देखकर आपने अपना नयनयुगल सर्वांशमें सफल बनाया ॥८३

प्रथममलखनन्दां वीक्ष्य या तुष्टिरस्य
क्रमगमनजुषोभूज्जन्हुकन्यानुगस्य ।
पथि विमलजलानां स्रोतसां प्राप्य सङ्गं
प्रतिपदमधिका सा वृद्धिमेवाललम्बे ॥८४॥

हिमालय से उतरने के समय आपने सर्व प्रथम अलकनन्दा और मन्दाकिनी का सङ्गम देखकर जो आनन्द प्राप्त किया था, वह क्रमशः उत्तरोत्तर अन्य नदियों के सङ्गम देखने से बढ़ता ही गया, जिससे दर्शनजन्य आनन्द चरम सीमा पर पहुच गया ॥ ८४ ॥

उदयगिरितटानामुच्चमारभ्य भागं
बहुविधगिरिमार्गैरेवमभ्यागतस्य ।
हिमगिरिनवकूटप्रस्थितेरस्य मन्ये
तदवसितिमवाप्तं दैवतो दिक्प्रयाणम् ॥८५॥

उदयाचल से लेकर अस्ताचल तक समस्त पर्वतों के उच्च शिखरों को क्रमशः देख कर हिमालय की ओर प्रस्थान करने का जो आपका प्रयोजन था वह समाप्त होगया अर्थात् उत्तर दिग्विजय में आप सफल हुये ॥ ८५ ॥

अनुगतबहुसिद्धः कर्मयोगेष्वविद्धः
कृतिभिरतिसमिद्धः सर्वदिक्षुप्रसिद्धः ।
विविधगुणसमृद्धः कर्मदक्षेषु वृद्धः
स मुनिरधिकमिद्धः सम्बभूवात्रवद्धः ॥८६॥

सिद्ध पुरुषों में आसक्त कर्मयोग में, अनासक्त अपने उचित कर्मों से समिद्ध समस्त दिशाओं में प्रसिद्ध अनेक गुणों से समृद्ध कार्य करने-वालों में वृद्ध यागसाधनों से बद्ध भगवान् श्रीचन्द्र इस उत्तर देश में आकर बद्ध अर्थात् अनुरक्त हुये ॥८६

भवति गुणवशेन प्रायशो दिव्यदेशे
परमपदजुपामप्यादर सत्यमेतत् ।
यदयमुपरतोपि प्राप्तभोगेषु दैवा
द्धिमगिरिमधिगत्य व्यक्तरागो बभूव ॥८७॥

दिव्य देशों में गुणों की अधिकता से प्राय उच्चपद पर पहुँचे हुये महापुरुषों को भी अनुराग हो जाता है, यह बात अधिकाश में सत्य है—क्योंकि समस्त सासारिक भोगों से उपरत श्रीचन्द्र जी दैवयोग से इस उत्तर दिशा में आ कर अनुराग से रञ्जित न रहे ॥८७॥

सकलमपि विभागं भाग्यवानुत्तराया
दिश उचितविधानैरेवमभ्येत्य दिव्यम् ।
अवतरितुमभीप्सु. पुण्यदेशं यथाव-
द्धरकृतिभिरुपेतं श्रीहरद्वारमागात ॥८८॥

भाग्यवान् श्रीचन्द्र जी उत्तर दिशा का समस्त भाग इस यात्रा में देखकर नीचे उतरने की इच्छा से अन्त में भगवान शङ्कर की दिव्य कृतियों से सर्वता व्याप्त पुण्य प्राप्य हरिद्वार में आकर उपस्थित हुए जो कि आपके पूर्वज आचार्यों का प्रधान स्थान है ॥ ८८ ॥

अकृत,मखविभङ्ग यत्र दक्षस्य रुद्र.
सपदि समुपरुद्धश्रीविलासः शिवाया. ।
तदिदमखिलभोगस्पर्द्धि गङ्गोपकण्ठं
पुरवरमधिगत्य स्वस्थचित्तो बभूव॥८९॥

जहां पर दक्षापमान से रुष्ट भगवान् श्री वामदेव जी ने अपने निश्वास से उत्पन्न हुये वीरभद्र आदि अनेक गणों द्वारा उस प्रजापति के मख का नाश की

घात में सहार कर दिया, उस गङ्गातटवर्ति कनखल को प्राप्त कर भगवान् श्रीचन्द्र शान्त चित्त हुये ॥ ८९ ॥

इति मुनिवरजुष्टं पञ्चवर्षीयवृत्तं
ननमयय-युताभिर्मालिनीभिर्विविच्य ।
कृतसमयविभागः काव्यनिर्माणकाले
कविरयमवसानं प्रापयामास सर्गम् ॥९०॥

इस सर्ग में हमने पांच वर्षों में समाप्त हुये उत्तर भ्रमण का समस्त वृत्तान्त मालिनी छन्द में उपस्थित कर दिया है। इससे अगला दिग्विजय क्रम जिनको देखना हो वे सज्जन कृपया इस महाकाव्य के अग्रिम सर्गों का अवलोकन करें। यह सूचना देकर अब हम इस सर्ग को यहीं पर समाप्त करते हैं ॥ ९० ॥

इतिश्री सनाढ्यवंशोद्भव कविवर श्रीमदखिलानन्दशर्मप्रणीते—
सतिलक जगद्गुरुश्रीचन्द्रदिग्विजये महाकाव्ये
उत्तरदिग्विजयो नामैकादश सर्गः



# द्वादशः सर्गः

अथ प्रसन्नो भगवाननुग्रहा-
यथोत्तरं दिग्विजये कृतोद्यमः
महेन्द्रनामाङ्कितमुत्तमोत्तम
पुरं विवेश प्रथमानविक्रम ॥ १ ॥

उत्तर दिग्विजय के अनन्तर अन्य तीन दिशाओं के विजय म कृतोद्यम भगवान् श्रीचन्द्र हरिद्वार से प्रस्थित हाकर अबकी यात्रा में सर्वप्रथम इन्द्रप्रस्थ पहुचे ॥१॥

जयोचितं तत्र विधाय सर्वत.
प्रसाधनं साधितसर्वसाधन. ।
क्रमादवाप प्रथितां मधो· पुरीं
कलिन्दकन्यातटभूनिवेशिताम् ॥२॥

यहां पर दिग्विजय सम्बन्धी समस्त आयोजन एकत्र कर आपने यहा से यमुना।तट पर विद्यमान प्रसिद्ध मधुरापुरी के लिए गमन किया ॥ २ ॥

शशाङ्कवस्वाशुगचन्द्रसम्मिते
स वैक्रमाब्दे यमुनातटं गत. ।
यमद्वितीयामतिवाह्य सम्मदा-
जुगाम बृन्दावनमागतक्रमम् ॥ ३ ॥

विक्रम सवत् १५८१ की कार्त्तिक शुक्ल द्वितीया को मथुरा पहुचकर आपने यम द्वितीया को यमुना स्नान किया, जिसका महत्त्व पुराणों में विस्तृत रूप से कहा गया है ॥ ३ ॥

क्रमेण तस्मिन्नपि देवकीसुत-
प्रसादितात्मीयजने गुणोन्नते ।
दिनानि चत्वारि सुखेन यापय-
न्नगात्स गोवर्धनशैलमद्भुतम् ॥ ४ ॥

यहां से चलकर आप क्रम से वृन्दावन पहुँचे, वृन्दावन में चार दिन निवास करके यहां से भी आपने गोवर्धन के लिये गमन किया ॥ ४ ॥

दिने दिने यस्तिलशो विलीयते
मुरारिपादाब्जवियोगदुःखितः ।
स एव गोवर्धनभूधरो मुनिं
विलोक्य हर्षाद्ववृधे यथोत्तरम् ॥ ५ ॥

श्रीकृष्णजी के विरह में जो गोवर्धन प्रतिदिन तिलभर घटता है, वही आपका दर्शन पाकर उत्तरोत्तर वृद्धि को प्राप्त होने लगा ॥ ५ ॥

तथाविधं तं समवेक्ष्य भूधरं
प्रशस्तनानाविधतीर्थमध्यगम् ।
प्रवर्षणं नाम गिरिं तदुत्तरं
मुनिः प्रसन्नोयमगादनुत्तमम् ॥ ६ ॥

अनेक तीर्थों के मध्य में विद्यमान इस गोवर्धन पर्वत को देखकर आप यहांसे प्रवर्षण की ओर चले ॥ ६ ॥

रुषाधिकं यत्र पुरा सुराधिपो
ववर्ष नागेन्द्रकरोपमैर्घनैः ।
प्रवर्षणो नाम सएव भूधरः
पदं दृशोरस्य जगाम दैवतः ॥ ७ ॥

इन्द्र ने रुष्ट होकर जहां पर हाथी के सूंड के बराबर मोटी मोटी धाराओं से वर्षा की थी, वही प्रवर्षण नामक पर्वत दैवयोग से आपके दृष्टिगोचर हुआ ॥ ७ ॥

क्रमेण मासद्वयमत्र यापय-
न्नयं मुनीनामनुमोदनैर्मुनिः ।
प्रसङ्गसम्प्राप्तमुपागतक्रमं
जगाम गोवृन्दविशोभि गोकुलम् ॥ ८ ॥

इस प्रवर्षण गिरि पर आपने मुनियों के अनुमोदन से दो मास का समय व्यतीत किया, तदनन्तर आप यहां से गोसमूह समुल्लसित गोकुल के लिये प्रस्थित हुये जो कि नन्दगोपपुर के नाम से प्रसिद्ध है ॥ ८ ॥

यशोदया लालितमत्र माधवं
विलोक्य साक्षादुपकण्ठमागतम् ।
प्रसन्नचित्तो मकरार्कचंक्रमे
समाप तत्तस्रपुरं पथि स्थितम् ॥ ६ ॥

यहां आकर आपने देखा कि यशोदोत्संगलालित श्री बालमुकुन्द जी आपके पास आकर खेल रहे हैं, भगवान् के इस अलौकिक चमत्कार को देखकर आप बहुत गद्गद हुये और उनको ध्यान में रखकर आप यहां से तत्तग्राम पहुंचे ॥९॥

दिनानि वस्तुं कतिचित्तदन्तिके
कृतस्ववासो मुनिरेष मन्दिरे ।
पुरानुगीतां मुनिभिः प्रसङ्गतः
पपाठ गीतां मधुसूदनोदिताम् ॥१०॥

इस ग्राम में जाकर आप एक मन्दिर में उतरे और कुछ दिन यहां पर ठहर कर भगवद्गीता पर ध्यान पूर्वक एक उत्तम विवेचन लिखा ॥ १० ॥

प्रसङ्गतस्तत्र समागतं पुरः
कमप्यशङ्कं धनराजबालकम् ।
मुनिः प्रमोदेन तदान्वदर्शय-
द्धठोपविष्टं मुदितं मुरद्विषम् ॥११॥

इसी समय आपके पास गीतापाठ का प्रेमी एक धनराज नामक बालक आया जिसपर प्रसन्न होकर आपने उसको श्रीकृष्णजी का प्रत्यक्ष दर्शन करा दिया ।११।

मुरद्विपः सादरमत्र पूजनं
विधाय योगेन तदर्गलं पुरम् ।
निरर्गलं कर्तुमलं प्रपूजितो
जनैः प्रतस्थे भगवानितः परम् ॥१२॥

यहां पर ठहर कर आपने आदर पूर्वक भगवान का पूजन किया और अन्तमें आप यहांसे चलकर आगरा शहर पहुँचे ॥ १२ ॥

विधाय तत्रोपगतान्निरुत्तरा-
न्विवादमध्ये बहुशास्त्रसङ्गते ।
मुनिः प्रसङ्गादयमिष्टकेश्चितं
पुरं विवेशातिनलः पथि स्थितम् ॥१३॥

आपने यहां आकर यमुना तट पर आसन लगाया और एक मास ठहर कर यहां के समस्त पण्डितों को अनेक शास्त्रीय विषयों में निरुत्तर कर यहां से आप इटावा पहुंचे ॥१३॥

निबोध्य तत्रापि मनस्यत्रस्थितं
निगूढतत्त्वं मनुजानुपस्थितान् ।
मुनिर्मनस्वी गमनक्रमादलं
पुरीमयोध्यामविशत्प्रतिष्ठिताम् ॥१४॥

इटावा पहुँचकर आपने यमुना-तट पर एक शिव मन्दिर में विश्राम किया और आगत सज्जनों में, स्वागतपूर्वक धर्मोपदेश देकर यहां से आप धीरे-धीरे अयोध्या पहुँचे ॥१४॥

इहस्त्यविद्वद्गणदर्शितक्रमं
जनिस्थलं वीक्ष्य दशाननद्विपः ।
मुनिर्बभूवातितरां हृदन्तरे
रसद्वयान्तर्गतकल्पनादरः ॥१५॥

यहां आने पर बहुत से विद्वानों ने आपको श्री रामचन्द्र जी का जन्म-स्थान दिखाया जिसको देखकर आप दो विरुद्ध रसों से बने हुए श्लोक की तरह अत्यन्त गम्भीर होगए ॥१५॥

क्व सूर्यवंशप्रभवा महीभुजः
क्व तद्विधानामिह साधुशासनम् ।
क्व दुर्दशेयं यवनासुरैः कृता
विपर्ययः कालवशादयं भुवः ॥१६॥

यवन-ध्वस्त श्रीराम जन्मस्थल को देखकर आपने अपने मन में कहा कि सूर्यवंशीय राजाओं का कहां यह जन्मस्थल ? कहाँ उनका शासन ? और कहां यह वर्तमान दृश्य ? यह सब काल की महिमा है ॥१६॥

विचारयन्नेवमयं महामति-
मदोद्धतानां दमने धृतव्रतः ।
सुरापगासूर्यसुतासमागमं
दिदृक्षुरुत्कः समवाप सङ्गमम् ॥१७॥

यवनों द्वारा इसकी यह दुर्दशा देखकर आपने उनके संहार करने का अपने मन में पूरा-पूरा प्रण किया और अपने पूर्वजों को बार-बार स्मरण कर अन्त में आप यहां से प्रयाग के लिये प्रस्थित हुए ॥१७॥

मुनिप्रशस्ते कतिचिद्दिनान्ययं
शिवे भरद्वाजमुनेर्गुहोदरे ।
समाधियोगेन नयन्नवस्थितं
ददर्श तत्रैव वटं तटस्थितम् ॥१८॥

प्रयाग पहुंच कर आपने मुनि प्रशस्त भरद्वाज मुनि के आश्रम में अपना आसन लगाया और यहां की गुहा में समाधिस्थ होकर अक्षय वट का स्मरण किया ॥१८॥

महालये यद्दलमेकमाश्रितः
सुखेन शेते भगवानधोक्षजः ।
वटः स एवायमिति स्वचेतसा
विचार्य सद्यः स ननाम तत्पदम् ॥१९॥

महाप्रलय में इसी वट के एक पत्र पुट में भगवान् बालमुकुन्द जी अपने अंगूठों का अनूठा रस पीते हैं ऐसा अपने मनमें विचार कर आपने इस तटावस्थित वटके लिये प्रणाम किया ॥ १९ ॥

प्रमज्जतोऽयं नयनाष्टबाणभृ-
मिते क्रमाद्विक्रमभूपवत्सरे ।

शिवावतारः शिवरात्रिसन्निधौ
जगाम काशीं शिवदर्शनेच्छया ॥२०॥

विक्रम संवत् १८८२ में यहां से आप शिवरात्रि के समय वाराणसी पहुंचे जहां पर भगवान शङ्कर सर्वदा निवास करते हैं ॥ २० ॥

समेत्य काशीं मणिकर्णिकातटे
कृताह्निको देवदिदृक्षया द्रुतम् ।
स विश्वनाथं भगवन्तमीक्षितुं
विवेश तन्मन्दिरमुच्चगोपुरम् ॥२१॥

वहां पहुँच कर आपने मणिकर्णिका पर अपना आसन लगाया और नित्य-कर्म से निवृत्त होकर आप श्री विश्वनाथ जी का दर्शन करने के लिये मन्दिर में पहुँचे ॥ २१ ॥

स तत्र नैवेद्यविधानतत्परै-
र्निरुद्धमार्गः शिवमन्दिरोदरे ।
निवृत्य तस्मात्तदुपान्तभूतले
जजाप सोऽहंपदमात्मदर्शनः ॥२२॥

जिस समय आप मन्दिर में पहुंचे वह समय वहां पर भोग लगाने का था जिसमें नियमानुसार अन्दर कोई नहीं जा सकता था इस कारण पुजारियों ने अन्दर जाने से आपको रोका, रोकने पर आप वहां से हटकर कुछ दूर पर एक ऊंचे स्थान में बैठकर (सोहम्) पदका जप करने लगे यह सोहंपद ( योसावादित्ये पुरुषः सोसावहम् ) इस यजुर्वेद के अन्तिम मन्त्र में आता है इस लिये वैदिक है । ( सः अहं सोहम् ) यह इसका निर्वचन है । मंत्र में "यः" पद सापेक्ष है इस लिये "सः" पद का आना आवश्यक है । यस्त्वं सोहं यह अद्वैत ही इस सोहंपद का लक्ष्य है ॥ २२ ॥

निवृत्तनानाविधपूजनक्रियैः
प्रविश्य भोगालयमीक्षितो यदा ।
स विश्वनाथो नियमानुवर्तिभि-
स्तदा बभूवात्रविचित्रमद्भुतम् ॥२३॥

आपके बाहिर जाने पर विश्वनाथजी के मन्दिर में जो विचित्र घटना हुई अब आप उसको सुनिये। मन्दिर में भोग लगा कर कुछ समय के बाद पुजारी जब बाहिर से मन्दिर के अन्दर घुसे तो उन्होंने देखा कि मन्दिर में सन्नाटा छाया हुआ है ॥ २३ ॥

न विश्वनाथप्रियता न पूजक-
प्रवर्तिता कापि समर्चनक्रिया।
न तत्र नैवेद्यविधौ निवेदिता
विशिष्टनानाविधभोज्यविस्तृतिः ॥२४॥

श्री विश्वनाथ जी अप्रसन्न हैं पुजारियों की पूजा की सब सामग्री गायब है जिन पात्रों में भोग का सामान रखकर भोग लगाया गया था वह पात्र भी सबके सब गायब हैं ॥ २४ ॥

किमेतदाश्चर्यमिति स्वमानसे
विविच्य भूयः कृतपूजनक्रियैः।
समर्चकैरत्र पुनः प्रकल्पिता
क्षणाल्लयं तत्र ययौ प्रतिक्रिया ॥२५॥

इस अद्भुत आश्चर्य को देखकर पुजारी मनमें बहुत विस्मित हुए और दुबारा भोग लगाकर फिर रोज की तरह मन्दिर से कुछ देर बाहिर ठहर कर जब दुबारा फिर मन्दिर में प्रविष्ट हुए तो घटना पहिली जैसी ही नजर पड़ी। अबकी बार पुजारियों के आश्चर्य का कुछ ठिकाना नहीं रहा ॥ २५ ॥

विलोक्य नष्टां पुनरर्चनक्रिया-
मितस्ततो धावनतत्परा जनाः।
मुनेरुपान्ते सकलामुपस्थितिं
विलोक्य तस्थुर्जडतामुपागताः ॥२६॥

जब मन्दिर में दुबारा धरी हुई भोग सामग्री भी अकस्मात् गायब हो गई तब पुजारियों के होश गुम हो गये वे इधर उधर मन्दिर के चारों ओर भाग निकले बाहिर जाकर देखा तो सब भोग सामग्री आपके समक्ष में धरी हुई पाई इस अघटित घटना को घटी हुई देखकर पुजारी चित्र लिखित जैसे हो गए ॥ २६ ॥

निजापराधप्रतिनष्टबुद्धयो
यदास्य पादे लुलुठुर्नताननाः ।
मुनिस्तदायं भगवन्निवासतः
सुदूरमभ्येत्य ययावदर्शनम् ॥२७॥

आपके महत्त्व को न समझने वाले वे नष्टबुद्धि पुजारी लज्जित होकर जब आपके समक्ष अपने अपराध की क्षमा प्रार्थना के लिये आपके चरणों की ओर झपके तब आप मन्दिर से कुछ दूर चलकर अदृश्य होगए ॥ २७ ॥

विचित्रवृत्तान्तगभीरगुम्फना
सुदुर्घटेयं घटना गृहे गृहे ।
यदा ययौ विस्तृतिमुत्तरोत्तरं
तदा बभूव क्षुभितं नभस्तलम्॥२८॥

यह अद्भुत घटना जैसे २ काशी में फैलती गई तैसे २ मनुष्यों में घर २ आश्चर्यका ठिकाना न रहा सब मनुष्य घबरा करइधर.से उधर दौड़ने लगे ॥२८॥

इहत्यविद्वत्सु महानयं भ्रमः
परस्पराकर्णसजातसम्भ्रमः ।
पुपोष वृद्धिं विविधाद्भुतक्रमो
मुनिर्बभूव प्रथमानविक्रमः ॥२९॥

यहां के पण्डितों में भी यह वृत्तान्त जब कर्णाकर्णि क्रम से फैलगया तब समस्त काशी में आश्चर्य का ठिकाना न रहा और भगवान् श्रीचन्द्र इस घटना से सर्वत्र प्रसिद्ध हो गए ॥ २९ ॥

विनिर्गतोयं गगनाध्वना मुनि-
र्दशाश्वमेघेऽवतरन्नभस्तलात् ।
व्यलोकि सर्वैरधिकं धृतप्रभो
दिनोदये सूर्यइवाधिक प्रभः ॥३०॥

विश्वनाथ के मन्दिर के पास अदृश्य होकर जब आप दशाश्वमेधपर आकाश मार्ग से उतरते हुए दिखाई दिये तब ऐसा प्रतीत होता था कि मानो आकाशमार्ग से दूसरा सूर्य उतर रहा है ॥ ३० ॥

यथोचितं तस्य निशम्य विक्रमं
स सोमनाथो धृतशर्वविग्रहम् ।
मुनिं तमेवास्मरदात्मना भृशं
प्रशस्तकाश्मीरनिरीक्षितप्रभम् ॥३१॥

आपकी इस प्रकार की विचित्र घटना सुनकर पण्डित सोमनाथ त्रिपाठी ने अपने मनमें उसी मुनिवर का स्मरण किया जिसका अद्भुत पराक्रम वे काश्मीर म देख चुके थे ॥ ३१ ॥

समागतः कश्चिदलक्षितस्थितिः
शिवावतारो मुनिरित्यलं वदन् ।
समस्तकाशीस्थबुधव्रजस्तदा
सदण्डपातं प्रणनाम तं मुनिम् ॥३२॥

यहां के विद्वान् आपको अचिन्त्य विक्रम सुनकर दूसरा शिव मानते हुए आपके समक्ष में आकर साष्टाङ्ग प्रणाम करते हुए उपस्थित हुए ॥ ३२ ॥

सहागतं दर्शनविह्वलेक्षणं
स सोमनाथं मुनिरुत्कलोचनः ।
समीक्ष्य कण्ठग्रहपूर्वकं तदा
मुदाऽलिलिङ्ग स्मृतपूर्वकौतुकः ॥३३॥

अन्य विद्वानों के साथ आपके दर्शन के लिये आये हुए पण्डित सोमनाथ त्रिपाठी को देखकर आपने आलिङ्गन पूर्वक उनका स्वागत किया ॥ ३३ ॥

अनामयं कच्चिदिह स्थितस्य ते
वदेति पृष्टो मुनिना स कोविदः ।
भवत्पदाम्भोरुहदर्शनादिति
स्फुटं जगाद प्रणिपत्य तत्पदम् ॥३४॥

पास बैठने के अनन्तर आपने उनसे कुशल पूछ कर जैसे ही अपनी कृपा दृष्टि का उनपर प्रसार किया वैसे ही त्रिपाठी जी ने प्रणाम पूर्वक अपना समस्त वृतान्त कहना आरम्भ किया ॥ ३४ ॥

भवद्दिदृक्षावशतो जिजीविषा
यथा धृताद्यावधि सा फलोन्मुखी ।
भवत्कृपातः समभूदिति ध्रुवं
मयाऽधुना निश्चितमस्ति सर्वशः ॥३५॥

आपने कहा कि आपका दर्शन प्राप्त करने के लिये जिस जीवन की आशा को हमने आजतक स्थिर बनाया था वह आप की कृपा से सफल हुई ॥ ३५ ॥

तदद्य विश्रम्य भवानुपस्थितं
पदाश्रयं मां निजशिष्यपद्धतिम् ।
नयत्ववश्यं निजसन्धयाऽधुना,
सहप्रयाणेऽनुमतिं ददात्वलम् ॥३६॥

इसलिये आज यहां पर ठहर कर आप अपनी प्रतिज्ञा के अनुसार मुझे अपना शिष्य बनाकर अपने साथ चलने के लिये मुझे अनुमति दें ॥ ३६ ॥

इति ब्रुवन्तं तमवेक्ष्य सादरं
सहप्रयाणाय कृतस्वनिश्चयम् ।
स सोमनाथं पदयोरुपस्थितं
तदाऽन्वमंस्त स्मितमात्रसूचनः ॥३७॥

त्रिपाठी जी की विनयावनत यह प्रार्थना सुनकर आपने अपने साथ रहनेकी तो उनको अनुमति देदी परन्तु शिष्य बनानेकी प्रार्थना पर अभी आपने ध्यान नहीं दिया ॥ ३७ ॥

अनुग्रहं तादृशमस्य दैवतः
स सोमनाथः समवाप्य विस्मितः ।
यमप्रमेयं प्रमदं तदा दधौ
स केन वक्तुं भुवि शक्यतेऽधुना ॥३८॥

इस अवसर में त्रिपाठीजी ने आपसे यह अनुग्रह प्राप्त कर अपने मनमें जिस आनन्द का अनुभव किया उसका इस समय कहने के लिये कौन समर्थ हो सकता है ? ॥ ३८ ॥

गृहेगृहे मङ्गलतूर्यनिःस्वनैः
पदेपदे सत्कविगीतसंस्तवैः ।
समर्चितोयं मुनिनायकस्ततः
प्रसन्नचित्तो गमने रुचिं व्यधात् ॥३९॥

यहां पर घर २ में मङ्गलगान और पद २ में स्वागत स्तव सुनकर आप यहां से अगाड़ी जाने के लिये अपनी इच्छा प्रगट करने लगे ॥ ३९ ॥

विभूतिदानेन समस्तभूतिदः
शिवावतारः स तदा सरित्तटे ।
निजाग्निकुण्डादवचित्य यद्ददौ
तदेव सम्पत्तिकरं तदाऽभवत् ॥४०॥

चलने के समय आप के पास जिस २ कामना को लेकर जो २ सज्जन आये आपने उन सबको अपने अग्निकुण्ड की विभूति देकर सबका मनोरथ पूर्ण कर दिया ॥ ४० ॥

निजानुमत्या समुपस्थितं पदे
स सोमनाथं वहुपण्डितानुगम् ।
सहाऽनुगृह्य प्रतिपूजितो जनै-
रितः प्रतस्थे नगरं गयाभिधम् ॥४१॥

अपनी अनुमति से अनुगृहीत पण्डित सोमनाथ त्रिपाठी को अन्य अनेक पण्डितों के साथ चलने के लिये उद्यत देखकर आप यहां से गया के लिये प्रस्थित हुए ॥ ४१ ॥

इहस्थितं बौद्धमठं विलोकय-
न्नवस्थितं फल्गुनदीतटेऽवटम् ।
यदाऽलुलोके शतशस्तदाऽभव-
न्विमुक्तवन्धाः समतीत्य फल्गुताम् ॥४२॥

गया में पहुंचकर आपने सर्व प्रथम यहां के प्रसिद्ध बौद्ध मठ को देखा जिसमें अनेक बौद्ध भिक्षु रहते थे । इसके अनन्तर फल्गु नदी के तट पर विद्यमान एक

अवट अर्थात् गर्त को देखा जिसमें पड़े हुए बहुत से प्राणी आपके दृष्टिपात से मुक्त होकर अपने २ पदों को प्राप्त हुए ॥ ४२ ॥

शिवावतारस्य तदा विलोकना–
तिपशाचभावं प्रगता गयोदरे ।
विहाय कर्मानुगतां पिशाचतां
न के बभूवुर्मनुजा गतव्यथाः ॥४३॥

गयामें आपके पहुंचने पर पिशाच भाव को प्राप्त हुए बहुत अन्य प्राणी भी आपका दर्शन प्राप्त कर पापों के फल में प्राप्त पिशाच भाव को छोड़ कर सद्यः बन्धन से मुक्त हो गये ॥ ४३ ॥

विहारभूमौ समुपागतं मुनिं
निपीय तत्प्रान्तगता महोदयाः ।
मुनिव्रतं धारयितुं समुद्यता
बभूवुराबालमुदीर्णकीर्त्तयः ॥४४॥

विहार प्रान्त में आपका आगमन सुनकर उस प्रान्त के बहुत से सज्जन आपसे मुनिव्रत लेने के लिये अपनी २ इच्छा प्रकट करने लगे ॥ ४४ ॥

असावपि प्रान्तगतानिहागता–
न्विलोक्य देवेन पदं समागतान् ।
मुनिव्रते सादरमुद्दिधीर्षया
नियोजयामास नियन्त्रितक्रियः ॥४५॥

आपने उनकी प्रार्थना सुनकर उनके उद्धार की कामना से उनको उदासीन मार्ग की दीक्षा देकर भव सम्बन्धी बन्धनों से सर्वदा के लिये उनको मुक्त किया ॥ ४५ ॥

समाश्रितानां निजदीक्षयामुनि–
र्विधाय सर्वोन्नतिमुत्तरस्थितम् ।
विहारभूमण्डलमण्डनं जवा–
ज्जगाम तत्पाटलिपुत्रमुन्नतम् ॥४६॥

शरण में आए हुये समस्त मनुष्यों को अपनी दीक्षा से उन्नति की ओर लगा कर आप यहां से उत्तर भाग में वर्तमान पाटलिपुत्र पहुँचे ॥ ४६ ॥

अवाप्य गङ्गातटभूमिनिर्मितं
पुरं मुनिर्देशदिदृक्षया ततः ।
द्रुतं समुत्तीर्य सुरापगामगा-
दनुत्तमं शोणपुरं पुरः स्थितम् ॥४७॥

गङ्गा तट पर अवस्थित इस पाटलिपुत्र में पहुच कर आप देश दर्शन की इच्छा से गंगा के उस पार वर्तमान शोणपुर के लिये चले गये ॥ ४७ ॥

अवेत्य तत्राद्भुतमेकविग्रहं
हरं हरिं भिन्नगुणाश्रयं समम् ।
व्यवस्थितं भेदमपास्य कल्पितं
परामयं निर्वृतिमाप हर्षितः ॥४८॥

वहां पहुच कर आपने भिन्न भिन्न गुणाश्रय हर और हरि को एक विग्रह में अवस्थित देख कर वर्तमान समय में विद्यमान कल्पित भेद भाव को सर्वथा निर्मूल समझ कर अपने मन में एक विचित्र आनन्द का अनुभव किया ॥ ४८ ॥

प्रणम्य तत्रायमलं महेश्वरं
रमेश्वरं विग्रहमेकमाश्रितम् ।
निवृत्य तस्मात्पुनराप सत्वरं
तदेव शौद्धोदनिजन्मनः पदम् ॥४९॥

अन्त में आपने इस हरिहरक्षेत्र में रमेश्वर और महेश्वर को एक विग्रह में देख कर प्रणाम किया और वहां से गङ्गा जी को उतर कर फिर पाटलिपुत्र में प्रवेश किया ॥ ४९ ॥

बलेन तत्रायमुदस्य वादिनां
मतं विवादे बलवत्पुरोगतम् ।
जयाङ्कमुच्चं निचखान मन्दिरे
महध्वजं बौद्धविमर्दनक्षमम् ॥५०॥

यहां पर आकर आपने शास्त्रार्थ में वादियों द्वारा उपस्थापित बौद्ध मत का तिलशः खण्डन करके विजय सूचक अपना बृहद्ध्वज गाड़ दिया जो कि आज भी बहुत दूर से दीख रहा है ॥ ५० ॥

विजित्य तत्पाटलिपुत्रसङ्गतं
क्रमेण कर्मन्दिमहद्बलं ततः ।
समाप तद्राजगृहं प्रतिष्ठितं
विहारभूमेः कटकं यदुच्यते ॥५१॥

पाटलिपुत्र में एकत्र हुए कर्मन्दियों के बल को हटाकर आपने यहां से राजगृह के लिये प्रस्थान किया जो कि विहार प्रान्त का दुर्ग समझा जाता है। [ कर्मन्दकृशाश्वादिनिरिति पाणिनिः ] ॥ ५१ ॥

गिरिद्वयान्तर्गतगह्वराङ्कितं
सतप्तकुण्डं सवनं सनिर्झरम् ।
विलोक्य तद्राजगृहं महोन्नतं
निनाय तत्रैव दिनानि कानिचित् ॥५२॥

दो पर्वतों के बीच में अनेक गुहाओं द्वारा सब ओर से घिरे हुये तथा तप्तकुण्ड, वन और निर्झरों से अति सुन्दर इस राजगृह को देख कर आपने यहां कुछ दिन ठहरने का निश्चय किया ॥ ५२ ॥

इदं जरासन्धविनिर्मिताङ्गनं
विहारभूमेः प्रथितं गुहागृहम् ।
विलोक्य बौद्धैरभितः समावृतं
विवादयुद्धे मतिमादराददात् ॥५३॥

प्राचीन समय में यहां पर जरासन्ध का एक बड़ा भारी दुर्ग था जिसमें गुफाओं के रूप में अनेक भूगर्भगृह बने हुये थे बौद्धों ने इस दुर्ग के आस पास बहुत से मठ नियत कर दिये इसी लिये आपने भी यहां पर ठहरने का सङ्कल्प किया ॥ ५३ ॥

इहत्यकापालिकसङ्घमागतं
विजित्य वादे पुरतः प्रतिष्ठितम् ।

स शाक्तसङ्घं क्षपणैः प्रणोदितं
विमर्दयामास बलेन सद्बलः ॥५४॥

सबसे प्रथम यहां पर आपसे शास्त्रार्थ करने के लिये कापालिक आये इनके अनन्तर क्षपणकों के भेजे हुये शाक्तगण आये आपने शास्त्रार्थ में इन दोनों को परास्त कर विजय प्राप्त किया ॥ ५४ ॥

विनिर्गतानस्य भयेन वादिनो
निशम्य पश्चाच्छ्रमणास्तथागताः ।
प्रदुद्रुवुः केचन कान्दिशीकता-
मुपेत्य सिंहाद्धरिणा इवागताः ॥५५॥

वादी जनों को आपके भय से भागा हुआ सुनकर यहा के तथागत और श्रमण इस प्रकार मैदान छोड़ कर भागे जैसे सिंह से भीत होकर हरिण गण भागते हों ॥ ५५ ॥

इति क्रमेणात्र समागतानलं
शिलालिनो नास्तिकतामुपागतान् ।
विमर्दयन्नुग्रबलेन जित्वरः
स गृध्रकूटं नगमाप गत्वरः ॥५६॥

इस प्रकार क्रम क्रम से आये हुये नास्तिक शिलालियों को उग्र बल से विवाद युद्ध में परास्त कर आप यहां से गृध्रकूट पर्वत को चले ॥ ५६ ॥

इहापि शाक्तैर्यवनैरनारतं
प्रवञ्चितान्भैरवभूतजीवनान् ।
निजोपदेशैर्निगमानुमोदका-
न्विधाय पश्चादगमद्वनाद्वनम् ॥५७॥

यहां पर भी शाक्त और यवनों द्वारा वञ्चित किये हुये भैरव एव भूतों के उपासक किरात कोल तथा भिल्लों को अपने सदुपदेशों द्वारा अच्छे मार्ग में लगाकर आप यहां से अनेक गव्हर वनों में प्रविष्ट हुये ॥ ५७ ॥

परिभ्रमन्नेवमितस्ततो वनं
स भिल्लपल्लीः समतीत्य मार्गगाः ।
शिवावतारः शिवतातिरादरा-
द्दशाननेनाहृतमाप शङ्करम् ॥५८॥

गृध्रकूट के परिसर में वर्तमान वनगत अनेक भिल्ल पल्लियों को देखते हुये आप अन्त में रावण के द्वारा लाये हुये एक शिवजी के मन्दिर में पहुचे ॥ ५८ ॥

शिवोयमस्मिन्विजने महावने
दशाननेनाप्रतिमेन दैवतः ।
न्यिताचकस्मान्निहितः क्षणादलं
विवेश पातालतलं महाविलम् ॥५९॥

ये शिवजी महाबली रावण ने किसी कारण वश कैलाश से लाकर यहां पर वन में लाकर रख दिये थे जो पाताल तक प्रविष्ट होकर दुबारा रावण से भी नहीं उठाये जा सके ॥ ५९ ॥

ततः प्रभृत्यत्र शिवार्चने रतैः
स वैद्यनाथाभिधया समर्चितः ।
ददाति भुक्तिं कृपया तदुत्तरं
विमुक्तिमप्यादरतः प्रतिष्ठितः ॥६०॥

तब से अब तक आप इसी वन में विराजमान हैं शिव पूजक आपको वैद्यनाथ के नाम से अर्चित कर आपकी दी हुई भुक्ति और मुक्ति दोनों का उपभोग कर रहे हैं ॥ ६० ॥

समर्चयन्नत्र मुनिः क्रमागतं
पथि स्थितं श्रीमधुसूदनेश्वरम् ।
प्रणम्य तेनानुमतः पुरोगतं
स मन्दरं भूधरमारुरोह तम् ॥६१॥

आपने भी यहां पर श्री वैद्यनाथ शिव का पूजन कर यहा से पूर्व भाग मे अवस्थित श्रीमधुसूदनेश्वर की दर्शनेच्छा से प्रस्थान किया जोकि वर्तमान समय में जिला भागलपुर के अन्दर है ॥६१॥

अयं नगेन्द्रः समुपागतैर्जनै-
नितान्तमद्यापि मुहुर्विलोकितः।
सुरासुरैर्वासुकिवेष्टनाङ्कितो
दिशत्यमन्दं क्रमब्धिमन्थनम् ॥६२॥

यहां पहुंचकर आपने मधुसूदनेश्वर जी का दर्शन कर, इसी के पास विद्यमान मन्दराचल का निरीक्षण किया। जो वर्तमान समय में भी वासुकिवेष्टन का चिह्न रखता हुआ आज भी आगत सज्जनों को समुद्र मन्थन का स्मरण करा रहा है ॥६२॥

प्रशस्तनानाविधविस्मयाकरं
विलोकयन्नप्रतिमं स मन्दरम्।
जवाज्जयी तत्पुरमाप यज्जनैः
क्षितौ नवद्वीपपदेन गीयते ॥६३॥

अनेक विस्मयों के आकारभूत इस मन्दराचल को देखकर आप यहां से नवद्वीप की ओर प्रस्थित हुए जो अङ्ग और वङ्ग के उत्तरकोण में विद्यमान है ॥६३॥

इहत्यविद्वद्भिरलं समर्चितः
शिवावतारो मुनिरेष सत्वरम्।
कलिङ्गवङ्गाङ्गजनैः प्रतिष्ठितं
प्रसिद्धमेकं नगरं समागमत् ॥६४॥

नवद्वीप के विद्वानों से सत्कृत होकर आप नवद्वीप से कामरूप देशगत कामाक्षी नगर के लिये प्रस्थित हुए जो उस प्रान्त का सर्वोत्तम स्थान है ॥६४॥

अहर्निशं यत्र जनैः प्रगीयते
शिवेतिवर्णद्वयमेव साधकैः।
स कामरूपः प्रथितोऽस्य भूपतिः
शिवावतारस्य समर्चनं व्यधात् ॥६५॥

जिस नगर में प्रायः उपासक गण शिवा-शिवा कहते हुए दो अक्षर वाले इसी नाम को रटा करते हैं उस प्रान्त के राजा ने आपको शिवरूप मानकर आपका बड़ा सम्मान किया ॥६५॥

नतेन भक्त्या शिरसा मुनेः पदं
शिरस्यवस्थाप्य महीभुजा कृतम् ।
यदर्हणं तन्न कदापि शक्यते
प्रवक्तुमस्मद्विधकाव्यकोविदैः ॥६६॥

भक्ति से विनत उस कामरूपेश्वर ने आपका चरण कमल अपने शिर पर रखकर जो आपका पूजन किया उसका वर्णन वर्तमान समय के कविगण नहीं कर सकते ॥६६॥

इतो निवृत्य प्रणतार्तिहा मुनिः
समुद्रतीरस्थितमुच्चगोपुरम् ।
नभोविभागादवतीर्य सत्वरं
विवेश रम्योत्कलमण्डनं पुरम् ॥६७॥

पूर्व दिशा के इस अन्तिम नगर से आप कामाक्षी का दर्शन करके समुद्र तट पर वर्तमान जगन्नाथपुरी के लिये प्रस्थित हुए ॥६७॥

हरिं जगन्नाथमिह प्रतिष्ठितं
शिवावतारो मुनिरेष सादरम् ।
प्रणम्य तत्रैव समुद्रसन्निधौ
निजाधिवासं समकल्पयच्छिवम् ॥६८॥

उत्कल देश के प्रधान केन्द्रभूत पुरी में पहुंचकर आपने जगन्नाथजी का दर्शन कर समुद्र के तट पर अपना निवास स्थान नियत किया जो अब तक विद्यमान है ॥६८॥

समागतं दिग्विजयप्रधर्षित-
प्रकाण्डविद्वद्गणमण्डनं मुनिम् ।
विलोक्य तत्तद्विपयेषु विस्तृता
विवादवाञ्छा समभूद्विरोधिनाम् ॥६९॥

दिग्विजय प्रसङ्ग से अनेक दिग्विजयी पण्डितों के साथ यहां आये हुये आप को देख कर विरोधी पण्डितों के मन में शास्त्रार्थ करने की इच्छा हुई ॥ ६९ ॥

सहागतं केचिदुदग्रमुत्कलाः
समीक्ष्य काशीस्थबुधव्रजं भयात् ।
प्रदुद्रुवुः पण्डितमानिनो जना
दिशां मुखानि प्रसभं विनिर्जिताः ॥७०॥

आपके साथ में दिग्विजयी पण्डित सोमनाथ आदि भी उपस्थित थे उनको देखकर पण्डितम्मन्य यहां के वादीभट शास्त्रार्थ में हार कर इधर उधर भाग निकले ॥ ७० ॥

निरादृताः केपि विनष्टबुद्धयो
बुधव्रजेनानुगतेन सत्वरम् ।
विवादयुद्धे मनुजास्त्रपावशा-
न्मनोदधुस्तत्र समुद्रमज्जने ॥७१॥

कुछ पण्डित शास्त्रार्थ में हार कर लज्जा और भय के कारण इधर उधर न जाकर सर्वदा के लिये समुद्र में छिपने के लिये उद्यत हुये ॥ ७१ ॥

विनिर्गतानस्य भयेन पण्डिता-
न्निशम्य सर्वे मनुजाः पुरीगताः ।
मतं मुनेरस्य मुदा मनःपथे
निवेश्य दास्यं प्रययुः समन्ततः ॥७२॥

आपके भय से इस प्रान्त के प्रधान प्रधान पण्डितों को भागा हुआ सुनकर जगन्नाथ पुरी के रहने वाले अन्य समस्त सज्जन आपका सिद्धान्त अजेय समझ कर आपका दास्य स्वीकार करने पर उद्यत हुये ॥ ७२ ॥

युगाष्टबाणेन्दुमितेऽत्र वैक्रमे
मधावुपेते सितपञ्चमीदिने ।
स सोमनाथं नियमेन शिष्यता-
न्निनाय पुर्यां मुनिदीक्षया मुनिः ॥७३॥

इसी जगन्नाथ पुरी में विक्रम सवत् १५८४ चैत्र शुक्ल पञ्चमी के दिन आपने

सोमनाथ त्रिपाठी को नियमानुसार उदासीन मत की दीक्षा देकर सोमदेव नाम से अपना शिष्य बनाया ॥ ७३ ॥

प्रसङ्गतोस्मिन्समये समागतः
प्रसिद्धचैतन्यमहाप्रभुः प्रभोः ।
पदारविन्दानुरतः क्रमान्मुनेः
प्रसादपात्रं समभूद्विनिर्जितः ॥७४॥

प्रसङ्ग से इसी समय आपके पास चैतन्य महाप्रभु भी आप से मिलने के लिए आये हुए थे जो विचार के समय आपके सपक्ष निरुत्तर होकर आपके दास बन गए ॥७४॥

इह प्रतिष्ठाप्य मठं महोदयः
स बालहासोदितपद्धतेः शिवम् ।
क्रमादुदासीनपथप्रवर्द्धनो
मुनिर्बभूवातितरां कृतक्रियः ॥७५॥

पुरी में समुद्र-तट पर जहां आप ठहरे हुए थे वहां बालहास पद्धति के मगुदास उदासी ने एक स्थान बनाया था, जो अब मगु मठ के नाम से प्रसिद्ध है। यहा पर इतना काम करके आप कृतकृत्य हो गए ॥७५॥

अनेकविद्वज्जनमण्डलाग्रणीः
स सोमदेवोपि गुरोरनुज्ञया ।
सहैव तिष्ठन्विजये कृतोद्यमः
प्रकम्पयामास मनांसि विद्विषाम् ॥७६॥

इधर सोमदेव भी अब नियमानुसार उदासीन बनकर आपकी आज्ञा से आपके साथ रहते हुए दिग्विजय के कार्य में सर्वदा दत्त चित्त होकर विपक्षियों का मुखमर्दन करने के लिए सन्नद्ध होगए ॥७६॥

महेन्द्रगुप्तां दिशमेवमादरा-
द्विजित्य वादे निगमानुमोदितम् ।

शिवावतारो मुनिरेष सत्वरं
मतं मुनीनामनयन्महोदयम् ॥७७॥

भगवान् श्रीचन्द्र जी इस प्रकार महेन्द्रपुर्ण पूर्व दिशा को धर्मयुद्ध में जीतकर इस प्रान्त में वेद प्रतिपादित उदासीन मत को अपने परिश्रम से उन्नति पर पहुँचा गए ॥७७॥

प्रसङ्गमेवं भगवत्कृपावशा-
त्समाप्य हर्षेण मयापि नीयते ।
दिनान्तभागेऽवसितिं क्रमागत-
क्रमेण सर्गोपि निसर्गसुन्दरः ॥७८॥

आपके दिग्विजय प्रसङ्ग में इतना ही कह कर अब हम भी दिन के अन्त भाग में इस सर्ग को इसी वृत्तान्त के साथ-साथ समाप्त करते हैं ॥७८॥

इतः परं दिग्विजयप्रसङ्गतो-
ऽवशिष्टवृत्तं प्रसभं दिदृक्षुभिः ।
महोदयैरग्रिमसर्गदर्शने
मनः प्रदेयं मुनिमण्डलानुगैः ॥७९॥

इससे अग्रिम दिग्विजय का प्रसङ्ग जिन महानुभावों को देखना हो वे इस महाकाव्य के अग्रिम सर्गों का अवलोकन करें ॥७९॥

इतिश्री सनाढ्यवंशोद्भव कविवर श्रीमदखिलानन्दशर्मप्रणीते
सविलास जगद्गुरुश्रीचन्द्रदिग्विजये महाकाव्ये
पूर्वदिग्विजयो नाम द्वादश सर्ग



# त्रयोदशः सर्गः



अथ प्रतस्थे भगवान्मुनिमण्डलमण्डनः ।
परीतो बहुभिः शिष्यैः पुरं जनकपालितम् ॥१॥
तत्र नानामुनिजनैः कृतनानाविधार्थनः ।
उदासीनपथं तेने सनकादिप्रवर्तितम् ॥२॥
दिनानि कतिचित्तत्र मुनिभिः सह संवसन् ।
दिव्यं हरिहरक्षेत्रं पुनराप मनोहरम् ॥३॥
एकमूर्तिनिविष्टाङ्गौ देवौ हरिहरौ नमन् ।
नैमिषारण्यमगमत्पुराणाचार्यसत्कृतम् ॥४॥
व्यासादिमुनिभिस्तत्र कृतवासे मनोरमे ।
वने दिनानि कतिचिन्निनाय नतशङ्करः ॥५॥
सुलक्षणाकृतध्यानः स्मृतमात्रो नभस्तलात् ।
सन्धामनुसरन्नेष देशं पञ्चनदं ययौ ॥६॥
तत्रावतीर्य नभसो मुनिर्नारदवद्द्रुतम् ।
पुरं जलन्धरन्नाम प्रतिभामण्डितं व्यधात् ॥७॥
समागतैरयन्तत्र वीरैः क्षत्रियपुङ्गवैः ।
सहायमगमत्सद्यः सुलतानपुरं महत् ॥८॥
भक्तः सुखदयालस्तत्पुरस्थं यवनेश्वरम् ।
मुनेरस्य प्रभावेण हर्षितः समसूचयत् ॥९॥
प्रभावितः स यवनो मुनेरस्य प्रभावतः ।
विहाय हिंसामभजद्भगवन्तं महेश्वरम् ॥१०॥

नानाविधकथालापैरेवं विनिवोधयन् ।
मुनिरेष दयादानतत्परं समकल्पयत् ॥११॥

पूर्व दिग्विजय के अनन्तर भगवान् श्रीचन्द्र जी अनेक शिष्यों के साथ जगन्नाथ पुरी से प्रस्थित होकर जनकपुर पहुंचे। वहां पर अनेक मुनि जनों की प्रार्थना से आपने सनकादि मुनि प्रवर्तित उदासीन मार्ग का प्रचार किया। कुछ दिन मुनियों के साथ यहां ठहर कर आप यहां से दुवारा हरिहरक्षेत्र पहुँचे। यहां पर एक विग्रह में अवस्थित हरि और हर को प्रणाम कर आप यहां से नैमिपारण्य पहुँचे, व्यास आदि अनेक मुनिगण से मिल इस वन में कुछ दिन निवास कर आप यहां से माता जी के स्मरण करने पर नभोमार्ग से पञ्चनद की ओर चले, वहां पर देवर्षि नारद की तरह आकाश से अवतीर्ण होकर आपने जालन्धर नामक नगर को अलंकृत किया यहां पर दर्शनार्थ उपस्थित भक्त सुखदयालु आदि अनेक वीर क्षत्रियों के साथ आप यहां से सुलतानपुर पहुंचे। यहां के नवाव दौलतखां लोदी के पास जाकर भक्त सुखदयालु ने आप के प्रभावों की बहुत कुछ प्रशंसा की जिससे प्रभावित होकर नवाव आपका भक्त बन गया और आपके सदुपदेशों से हिंसा आदि कुकर्मों को छोड़ कर दया और दान आदि उत्तम कामों में प्रवृत्त हुआ ॥ १—११ ॥

पुरादस्मादपि मुनिः करतारपुरं परम् ।
समेत्य नगराद्दूरमासनं समयोजयत् ॥१२॥
समागतं निजसुतं समाकर्ण्य तदम्बिका ।
लक्ष्मीचन्द्रेण सहिता समायाता तदाश्रमम् ॥१३॥
उपस्थितां निजामम्बां वीक्ष्य तस्याः पदद्वयम् ।
मुनिरेष यथाशास्त्रमभिवाद्येदमब्रवीत् ॥१४॥
कच्चिदम्ब वियोगेन मम दूनासि यद्द्रुतम् ।
दूरस्थितं निजप्रेम्णा मामुपस्थितमस्मरः ॥१५॥
एवं बहुविधप्रश्नैः समाश्वास्य मुहुर्मुनिः ।
मातरं साश्रुनयनां ववन्दे पदयोः पतन् ॥१६॥

लक्ष्मीचन्द्राभिधं पश्चादनुजं मृदुपाणिना ।
परामृशन्नतपदं मुनिः पप्रच्छ तद्गतिम् ॥१७॥
मात्रा पुनः कृतान्प्रश्नानाकर्ण्य विविधक्रमान् ।
कापिलैरुत्तरैः सम्यक् तोषयामास मातरम् ॥१८॥
निपीय सूत्तरं माता श्रीचन्द्रवदनोद्गतम् ।
परां निर्वृत्तिमापेदे गतमोहव्यथाऽभवत् ॥१९॥
अनुरोधादयं तत्र मातुः कर्तव्यगौरवात् ।
मासान्कतिचिदास्थाय धर्मचर्चामवर्धयत् ॥२०॥

इसके अन्तर आप यहां से करतारपुर पहुँचे और नगर के बाहर अपना आसन लगाया । आपको यहां पर आया हुआ सुनकर आपकी माता लक्ष्मीचन्द्र को साथ लेकर आपके पास पहुंची । माता जी को देखकर आप आसन से उठे और मर्यादानुसार उनको प्रणाम कर कहने लगे कि मेरे वियोग में आपको क्या कष्ट हुआ, जिसके लिये आपने मेरा स्मरण किया ? इस प्रकार अनेक प्रश्न करने पर आपने माता जी को बहुत सान्त्वना दी और अपने भाई लक्ष्मीचन्द्र को आशीर्वाद देकर बहुत काल तक उनके साथ वार्तालाप किया इसके अनन्तर माता ने आपसे कुछ शास्त्रीय प्रश्न किये, जिनका उत्तर आपने सांख्यपद्धति से दिया, माता आपके उत्तर को सुनकर आनन्द में मग्न हुई और अज्ञान रूप मोह को छोड़ कर ज्ञानवती होगई । माता के अनुरोध से आप यहां पर कुछ दिन ठहर कर सनातनधर्म की चर्चा से अपने समय को व्यतीत करते रहे ॥ १२—२० ॥

अस्मिन्नेवान्तरे तत्र लक्ष्मीचन्द्रोऽनुजो मुनेः ।
लोकान्तरं प्रतिगतो धर्मचन्द्रमिह त्यजन् ॥२१॥
तमयं भ्रातरि प्रेते भ्रातृव्यं समुपस्थितम् ।
कुलतन्तुमनुस्मृत्य निजवंशप्रवर्धनम् ॥२२॥
उदासीनपथाभिन्नां ऋषिदीक्षामनुत्तमाम् ।
तस्मै प्रदाय विधिवच्छिष्यतामनयन्मुनिः ॥२३॥

दीक्षामिमामनुप्राप्य गृहस्थोपि यथोचिताम् ।
कर्तुमर्हति कर्माणि यथापूर्वं नृपः पृथुः ॥२४॥
भ्रातृव्यमेवं विधिवद्दीक्षितं प्रविधाय सः ।
पितुरप्यागतस्यात्र ननाम पदपङ्कजम् ॥२५॥
त्रिवार्षिकमिमं त्यक्त्वा गृहे पुत्रं पिता वनम् ।
ययौ तदुत्तरमयं नापश्यन्मुनिमात्मजम् ॥२६॥
द्वात्रिंशद्वर्षदेशीयमात्मजं नानको गुरुः ।
विलोक्य नयनद्वन्द्वमद्य दिव्यफलं व्यधात् ॥२७॥
एवमत्र गते काले मुनिर्बहुतिथे द्रुतम् ।
ययावितो गुरुपदं काश्मीरविषयस्थितम् ॥२८॥
दिनानि कतिचित्तत्र विश्रम्य गुरुसन्निधौ ।
ययौ ततोपि कर्तव्यपारवश्येन सत्वरम् ॥२९॥
वाणाङ्कवाणेन्दुमिते विक्रमे वत्सरे मुनिः ।
सीमाप्रान्तगतं पेशावर पत्तनमभ्यगात् ॥३०॥

इसी अवसर में आपका अनुज लक्ष्मीचन्द्र परलोक सिधारा और धर्मचन्द्र नामक अपने पुत्र को आपके आश्रय में छोड़ गया। भाई के स्वर्ग सिधारने पर आपने अपने भतीजे को अपने भावी वंश का एकमात्र मूल समझ कर उसके लिये उदासीन मत से अभिन्न ऋषि दीक्षा देकर अपना शिष्य बनाया। यह वह दीक्षा है जिसको प्राप्त होकर मनुष्य गृह में रहकर भी मोक्ष प्राप्ति के साधन कर सकता है, जिस प्रकार पूर्व समय में महाराजा पृथु ने किया था। अपने भ्रातृव्य को इस प्रकार विधिपूर्वक अपना शिष्य बनाकर आपने अपने समीप आए हुए अपने पितृदेव को प्रणाम किया। आपके पिता आपको घर में तीन वर्ष का छोड़कर तीर्थाटन के लिये घर से चले गए थे तब से अब तक मिलने का कोई अवसर नहीं आया। आज दैवयोग से बत्तीस वर्ष के बाद यह अवसर प्राप्त हुआ जिसमें पिता ने पुत्र को देखकर अपना नयनयुगल सफल किया। इस प्रकार यहां पर बहुत समय बीतने पर आप यहां से काश्मीर चले गए। वहां

पर गुरुजी के पास कुछ दिन ठहर कर १५९५ विक्रम संवत् में आप अपना कर्तव्य पूरा करने के लिये पेशावर चले गए ॥२१—३०॥

अत्रागतं मुनिवरं समाकर्ण्यातिहर्षितः ।
कश्चित्सांयात्रिको भूरि द्रव्यमस्यपुरो न्यधात् ॥२१॥
असौ पोतवणिक्पूर्वं समुद्रे विपणीकृतम् ।
पोते निधाय विविधद्रव्यं देशान्तरादगात् ॥२२॥
मध्येसमुद्रमागत्य यदा पोतः प्रकम्पितः ।
झञ्झावातैस्तदा पोतवणिक् सस्मार तं मुनिम् ॥२३॥
स्मृतमात्रेण मुनिना समुद्रे स्थिरताङ्गते ।
सांयात्रिको निजां यात्रां पूरयामास दैवतः ॥२४॥
सएवायमिहागत्य धनं भूरि न्यवेदयत् ।
मुनये मुनिरप्याशु तेनधर्मस्थलं व्यधात् ॥२५॥
श्रीचन्द्रधर्मशालेयमद्यापि बहुभिर्जनैः ।
गीयते यत्र बहवः कुर्वन्ति हरिकीर्तनम् ॥२६॥
अहर्दिवमिह प्रेम्णा घृताक्ताः पञ्चदीपकाः ।
प्रज्वाल्यन्ते बहुजनैर्धर्ममार्गानुयायिभिः ॥२७॥
एवमत्र निजं धर्मं व्यवस्थाप्य सनातनम् ।
प्रतस्थे यावनं देशं मुनिरेष महाबलः ॥२८॥

आपको यहां पर आया हुआ सुनकर एक सायात्रिक बहुत सा धन लेकर आपको भेंट करने के लिये आया यह सौदागर विदेश से माल भर कर अपने देश को लौट रहा था कि इतने ही में मार्ग में समुद्री तूफान आने से जहाज डूबने लगा जिस समय यह घटना हुई उसी समय सौदागर ने आपका ध्यान किया जिससे समुद्र स्थिर हो गया और सौदागर लाखों रुपयों का माल लेकर घर आ गया। घर आते ही उसने ढूढते-ढूढते आपको पेशावर में पाया। आपने भी उस द्रव्य से पेशावर में एक स्थान बनवाया जो आज भी श्रीचन्द्र धर्मशाला

के नाम से प्रसिद्ध है। इसमें पेशावर के सब हिन्दू आज भी एकत्र होकर हरि-कीर्तन और धर्म-चर्चा करते हैं। इस स्थान में अहर्निश पांच घृत के दीपक जलते हैं जिनको यहां के लोग ज्योति कहते हैं। इस प्रकार आप यहां पर अपने धर्म की व्यवस्था करके यहां से काबुल के लिये प्रस्थित हुए ॥३१—३८॥

अत्रागतमिमं वीक्ष्य बहवो यवना अपि ।
विहाय यावनं मार्गं हरिभक्तिमुपागमन् ॥३६॥
एकोत्र यवनो हित्वा यावनं मतमादरात् ।
रामभक्तिपरो भूत्वा बभ्राम यवनव्रजे ॥४०॥
तथाविधं तमालोक्य यवनं हरिकीर्तनम् ।
चुक्षुभुर्बहवो धूर्ता यवना वेदविद्विषः ॥४१॥
अथैकदा हरिपदं गायन्तं तमितस्ततः ।
समेता यवनाः पापाः पथि लोष्ठैरताडयन् ॥४२॥
भगवद्भजनध्यानसमासक्तः स सत्वरम् ।
मुनेराश्रममागत्य हरिमेव सदाऽस्मरत् ॥४३॥
तथावस्थमिमं वीक्ष्य ये प्रहर्तुमुपागताः ।
यवनास्ते मुनेःशापाद्बभूवुर्गतचक्षुषः ॥४४॥
पदात्पदमपि प्राणपरित्राणे कृतोद्यमाः ।
गन्तुं यदा न शेकुस्ते तदा मूर्छामुपागमन् ॥४५॥
अपराधक्षमाभिक्षां यदातेऽत्र ययाचिरे ।
तदा मुनिस्तानवदद्भक्तोयं जानकीपतेः ॥४६॥
यदि जीवितुमिच्छास्ति भवतां भुवने तदा ।
प्रार्थनीयः सएवाद्य हतोयः पथि कङ्कणैः ॥४७॥
मुनेरिदं वचः श्रुत्वा बहवो यवना सुराः ।
तमेव भगवद्भक्तं क्षमाभिक्षां ययाचिरे ॥४८॥

सोऽपि नैवं पुनःकार्यमित्युक्त्वा मुनिसन्निधौ ।
निषण्णः प्राह भगवत्पदं भजत रेशठाः ॥४६॥
एवं यवनसाम्राज्ये बहुदर्शित विक्रमः ।
मुनिरेष ततोऽप्यग्रे गान्धारं देशमभ्यगात् ॥५०॥

काबुल में पहुंच कर आपने एक तृण कुटीर में विश्राम किया और अखण्ड धूनी लगाकर अपने कार्य का आरम्भ किया। यहां पर बहुत से यवन आपको आया हुआ सुनकर आपके दर्शनार्थ आने लगे और आपका उपदेशामृत पानकर हरि भक्ति में आसक्त हुए। वजीरखां नामक एक यवन आपके प्रभाव से प्रभावित होकर अपने मत में अश्रद्धा करके पूर्णरूप से रामभक्त होकर यवनों में घूमने लगा। उसको ऐसा देखकर बहुत से हिन्दूधर्म के द्वेषी यवन क्षुब्ध हो उठे। ऐसी परिस्थिति में एक दिन वह खड़तालों पर हरिकीर्त्तन करता करता यवन मन्दिर के पास होकर निकल रहा था कि उसके ऊपर यवनों ने ढेले फेंकने आरम्भ किये। वह उनकी कुछ परवाह न करता हुआ कीर्तन करते-करते आपके आश्रम में पहुंच गया। उसका पीछा करते हुए कुछ यवन वहां पर भी पहुंचे जहां पर आप समाधिस्थ थे। आपने जैसे ही उनको आंख खोलकर देखा वैसे ही वे सब अन्धे हो गए और पृथिवी ने उनके पैर जकड़ दिये। आपके इस चमत्कार से जब वे एक कदम भी अगाड़ी न चल सके तब वे सबके सब मूर्छित होकर पृथ्वी पर गिर पड़े और अपने अपराधों की आपसे क्षमा मांगने के लिये विवश हुए। आपने उनकी तरफ देखकर कहा कि यह वजीरखां रामचन्द्रजी का भक्त है इसलिए आप लोग यदि कुछ दिन जीवित रहना चाहते हैं तो उसी के शरण में जाइये जिस पर आप लोगों ने ढेलों की वर्षा की थी, अन्यथा आप लोगों की मृत्यु निकट आ पहुंची है। आपकी यह बात सुनकर वे भयभीत होकर उसी भक्त के पास पहुंचे जिस पर ढेले बर्साते थे। उसने भी आपका सङ्केत पाकर उन शरणार्थियों से कहा कि ऐसा कार्य भविष्य में कभी न करना यदि ऐसा फिर करोगे तो सर्वनाश हो जावेगा। अब यहां से जाओ और श्रीरघुनाथजी के शरण में जाकर उनसे क्षमा मांगो। वजीरखां की यह बात सुनकर वे सब लज्जित होकर वापिस चले गए और वजीरखां हरिकीर्त्तन में प्रवृत्त हुआ। इस प्रकार यवन साम्राज्य में अपना बल दिखाकर आप यहां से भी अगाड़ी कन्धार पहुंचे ॥३९—५०॥

अत्रापि सोमदेवादिशिष्यैरनुगतो मुनिः ।
निगमागतसिद्धान्तं शङ्खघोषैरपूरयत् ॥५१॥
यदायमगमत्तत्र गान्धारविषये मुनिः ।
बलवद्यावनमभूच्छासनं धर्मनाशनम् ॥५२॥
नष्टसङ्गठनाः सर्वे द्विजन्मानो भयाकुलाः ।
यवनध्वस्तभवना विविशुर्गिरिगह्वरम् ॥५३॥
न कोपि देवसदने शङ्खघोषमवर्धयत् ।
प्राणापहरणं तत्र तदाभूच्छंखनिस्स्वने ॥५४॥
एवंविधव्यतिकरव्यवस्थाया निदर्शकम् ।
एकमैतिह्यमधुना लिख्यते दृश्यतां बुधैः ॥५५॥

सोमदेव आदि अनेक शिष्यों के साथ कन्धार पहुंच कर आपने अपने योग बल से शङ्खनाद के साथ अपने सिद्धान्तों का प्रचार आरम्भ किया। जिस समय आप कन्धार पहुंचे, उस समय अफगानिस्तान पूर्णरूप से यवनाक्रान्त था। हिन्दुओं की दुर्दशा चरम सीमा तक पहुंच चुकी थी, सङ्गठन से रहित ब्राह्मणादि वर्ण यवनों के भय से अपना अपना घर छोड़कर पर्वतों की कन्दराओं में जा छिपे, कोई अपने देवमन्दिर में शङ्ख नहीं बजा सकता था, यदि कोई बजाता था तो उसके लिये प्राणदण्ड दिया जाता था। इस प्रकार के व्यतिकर का उदाहरण स्वरूप एक इतिहास यहां पर उपस्थित किया जाता है। पाठक ध्यानपूर्वक उसका अवलोकन करें ॥५१—५५॥

गान्धारविषये कश्चिद्ब्राह्मणो धर्मतत्परः ।
तदा लक्ष्मणदत्ताख्यो बभूव भगवत्परः ॥५६॥
कृष्णभक्तः स भवने मन्दिरं बहुसुन्दरम् ।
विधाय भगवत्पूजां चकार गतमत्सरः ॥५७॥
एकदा स बहिः कार्यपारवश्येन यन्त्रितः ।
जगाम रामरत्नाख्यं सुतं हित्वाऽल्पहायनम् ॥५८॥

गते पितरि कार्येण बहिः पुत्रो गृहस्थितम् ।
शङ्खमादाय चिक्रीड मुखमारुतपूरणैः ॥५६॥
दैवयोगेन तद्वायुरेकदा शङ्खमध्यगः ।
सूचयामास शङ्खस्य ध्वनिमस्फुटतां गतम् ॥६०॥
तस्य नादेन विक्षुब्धो यवनः कोपि बालकम् ।
तमाचकर्ष भवनाद्दण्डदाने समुद्यतः ॥६१॥
एतावतैव कालेन तत्पिता समुपागतः ।
बलादाकृष्यमाणं तं बालकं वह्वतर्जयत् ॥६२॥
बालकोयमिति ज्ञात्वा भवतास्य विचेष्टितम् ।
क्षन्तव्यमिति तं प्राह यवनं पुरतः स्थितम् ॥६३॥
अनादृत्य पितुर्वाक्यं बलादाकृष्यबालकम् ।
यदा निनाय यवनस्तदा विक्षुब्धमानसः ॥६४॥
ब्राह्मणः स मुनेः पार्श्वे समागत्य तथाविधम् ।
सर्वं निवेदयामास बालकस्य विचेष्टितम् ॥६५॥
ब्राह्मणस्य वचः श्रुत्वा करुणासागरो मुनिः ।
निजकुण्डात्समुद्धृत्य ददौ भस्म विभूतिदम् ॥६६॥
तदादाय गते तस्मिन्ब्राह्मणे यवनालयम् ।
विक्षोभः समभूत्तेषां यवनानां दले दले ॥६७॥

कन्धार में लक्ष्मणदत्त नामक एक ब्राह्मण रहता था जो कि अनन्य कृष्ण भक्त था। उसके घर में एक कृष्ण मन्दिर था जिसमें वह चुपचाप बिना शङ्ख आदि बाजे बजाए कृष्ण पूजन करता था। एक दिन किसी कार्यवश वह बाहर गया हुआ था उसका इकलौता रामरत्न नामक एक पुत्र था जो घर पर रह गया था वह पिता के बाहिर चले जाने पर शङ्ख से खेलने लगा। शङ्ख उससे बजता नहीं था। एक बार दैवयोग से वह थोड़ा सा बज गया जिसका हुआ अस्फुट शब्द बाहर सुनाई पड़ा। उस शब्द से क्षुब्ध हुआ एक यवन मौलवी

बालक को पकड़ लेने के लिये दरवाजे पर आ गया, इतने ही में उसका पिता भी बाहर से आ गया। पिता ने यवनाकृष्ट अपने उस बालक को बहुत फटकारा और उस यवन मौलवी से कहा कि इस अबोध बालक के इस कृत्य को आप क्षमा कीजियेगा इसने अज्ञानपूर्वक ऐसा कार्य किया है। पिता के इतना कहने पर भी उनकी बात पर कुछ ध्यान न देकर जब यवन उस बालक को बलपूर्वक खींचकर ले जाने लगा, तब ब्राह्मण घबड़ाकर आपके शरण में आया और बालक का सब हाल आपके समक्ष कह सुनाया। करुणासागर भगवान् उस ब्राह्मण की करुण कहानी सुनकर अपने अग्निकुण्ड से मन्त्राभिमन्त्रित विभूति देकर कहने लगे कि तुम शीघ्र जाकर बालक के मस्तक पर इस विभूति को लगा दो। आप की आज्ञा पाते ही ब्राह्मण विभूति लेकर कामरान के दरबार में पहुँच गया और उसने जाते ही बालक के मस्तक पर उसका तिलक कर दिया। ब्राह्मण के इस कृत्य को देखकर दरबार के मौलवी लोगों में बड़ा क्षोभ उत्पन्न हुआ और वे रामरत्न को दरबार में खड़ा करके अपने अपने मन्तव्यानुसार दण्ड का निर्णय करने लगे॥ ५६—६७॥

एकः समवदत्तेषां दले बालकघातनम्।
अपरो नेत्रकदनं तदन्यो हस्तशातनम्॥६८॥
लोष्ठघातैर्वधं कश्चिद्दण्डघातैरथापरः।
दिदेश तस्य बालस्य कृते धर्मविपर्ययम्॥६९॥
एवं भिन्नमतेष्वेषु यवनेषु स बालकः।
मुनिदत्तप्रसादेन पवित्रीकृतमस्तकः॥७०॥
विहस्य सर्वानवदत्किमर्थं क्रियते भ्रमः।
सज्जोऽहमस्मि धर्मार्थे प्राणदानाय सत्वरम्॥७१॥
हतः स्वर्गं गमिष्यामि भविष्याम्यथवाऽमरः।
परं धर्मं न हास्यामि जीवनार्थे कदर्थितः॥७२॥
इति तस्य वचः श्रुत्वा बालकस्य यथोचितम्।
यावत्ते निर्णयमदुस्तावता जडतां गताः॥७३॥

कोई कहने लगा कि इस बालक को प्राण दण्ड देना चाहिये दूसरा कहने लगा कि इसकी आंखें निकालनी चाहिये तीसरा कहने लगा कि इसके हाथ काटने चाहिये चौथा कहने लगा कि इसे मार-मार कर इसको मारना चाहिये पांचवां कहने लगा कि लाठियों के प्रहार से इसको मारना चाहिये छठवां कहने लगा कि बलात् यवन बना कर अपने दल में मिलाना चाहिये इस प्रकार उनकी अनेक विध दण्डाज्ञा सुनकर वह बालक बोला कि आप लोग क्यों इस प्रकार के प्रपञ्च में पड़े हैं मैं भगवान् के आशीर्वाद से अपने धर्म के लिये प्राण तक देने के लिये उद्यत हूँ यदि मैं धर्म के लिये मारा जाऊंगा तो स्वर्ग जाऊंगा अथवा अमर हो जाऊंगा परन्तु इस तुच्छ जीवन के लिये अपना धर्म नहीं छोड़ूंगा इस प्रकार बालक की धैर्य युक्त गम्भीर वाणी सुनकर जब तक वे मौलवी कामरान के दरबार में अपना निर्णय देने के लिये उद्यत हुये तब तक भगवान् की अद्भुत योग माया से वे सबके सब जकड़ गये ॥ ६८—७३ ॥

जिह्वाजाड्यमगाद्धस्तौ बद्धौ पाशेन केनचित् ।
काष्ठतामगमत्सद्यः शरीरं पापकर्मणाम् ॥७४॥
तेषामेवंविधां दृष्ट्वा दुर्दशामतिदुःखदाम् ।
हाहाकारः समभवत्सर्वत्रापि गृहे गृहे ॥७५॥
रामरत्नपिता पुत्रं समादाय मुनेः पदम् ।
पस्पर्श यत्प्रभावेन पुत्रो मृत्युमतीतरत् ॥७६॥
गान्धारदेशाधिपतिः सर्वमेतद्विलोकयन् ।
निजस्य सख्युः कथनान्मुनेः पदमुपागमत् ॥७७॥
नताननो गतमदो मुनेरस्य पुरःस्थितः ।
अपराधक्षमाभिक्षां वारम्वारमयाचत ॥७८॥
मुनिरप्यस्य विनयं विलोक्य शरणप्रदः ।
निजसिद्धिप्रभावेण बन्धनं पर्यवारयत् ॥७९॥
विमुक्त बन्धनेष्वेषु गतेषु निजमालयम् ।
मुनिः शिवाय भूतानां शिवमेव मुदाऽस्मरत् ॥८०॥

उन सब की जिव्हा स्तब्ध हो गई, हाथ और पैर अकड़ गये और शरीर काष्ठ की तरह जड़ हो गया उनकी यह दशा देख कर घर घर में हाहाकार मच गया रामरत्न का पिता रामरत्न को लेकर भगवान् के चरणों में आकर गिर गया क्यों कि आपके आशीर्वाद से ही उसके प्राण बचे हुये थे। कन्धार का बादशाह कामरान इन सब बातों से भयभीत होकर गुलअकबर नामक अपने मित्र के साथ भगवान् के पास पहुंचा और नतमस्तक होकर अपने अपराधों की बार बार क्षमा चाहने लगा। भगवान् इसकी दीन दशा देख कर अपने प्रभाव से सबको मुक्त बन्धन करके अन्त में सबको घर भेज कर अपनी योग विद्या से शिव का स्मरण करने लगे ॥ ७४—८० ॥

इदमेकं मया तस्य मुनेरत्र विचेष्टितम् ।
निवेदितमतोऽप्यन्यद्दीयतेस्य निदर्शनम् ॥८१॥

अधित्यकामधिगतो निर्भयो मुनिरेकदा ।
निजाश्रमे समासीनो ददर्श मृगशावकम् ॥८२॥

गिरेरुपत्यकादेशे चरन्तमकुतोभयम् ।
यवनः कश्चिदागत्य मृगयुस्तमघातयत् ॥८३॥

निपात्य नयने तस्य समुद्धर्तुं समुद्यतः ।
यदायमभवत्तत्र तदा मुनिरुवाच तम् ॥८४॥

येनास्य नयने वेगादुद्धृते समयान्तरे ।
तस्यापि नयने कोपि बलादेवोद्धरिष्यति ॥८५॥

एवमत्यन्तभयदां गिरमस्य महामुनेः ।
निशम्य स मदोन्मत्तो मुनिमेवमभाषत ॥८६॥

यद्ययं सद्यएवाद्य प्रभावात्ते मृगो निजाम् ।
दशामुपेयात्तदहं हास्यामि मृगयामिमाम् ॥८७॥

वदन्तमेवं यवनं विलोक्य मुनिसत्तमः ।
दृशापश्यन्मृगं सद्यः सोपि जीवनमाप्तवान् ॥८८॥

परमस्य मुनेः शापाद्गते काले सहोदरः ।
नयनेऽस्य समुद्धृत्य शापस्यान्तमदर्शयत् ॥८९॥
एवंविधान्यनेकानि चरितान्यस्य भूतले ।
लभ्यन्ते मुनिवर्यस्य निदर्शनपथानुगैः ॥९०॥

यह एक इतिहास यहां पर आपके सम्बन्ध में लिखा गया है, जो उस समय के अत्याचारों का निदर्शनमात्र कहा जा सकता है। अब इसी के जोड़ का दूसरा इतिहास भी उपस्थित किया जाता है। पाठक गण ! उसका धैर्यपूर्वक मनन करें। एक समय भगवान् पर्वत की अधित्यका में आश्रम में चरते हुए एक मृगशावक को ऊपर से देख रहे थे। उसको उस पर्वत की उपत्यका में घास चरते चरते एक शिकारी यवन ने मार दिया। मारकर वह शिकारी उसकी आंखें निकालने पर उतारू होगया। उसके इस कुकृत्य को देखकर आप उससे कहने लगे कि जिसने इस मृगशावक की आंखें निकाली हैं समयान्तर में उसकी आखें भी इसी प्रकार बल पूर्वक निकाल ली जावेंगी, भगवान् की इस अभिशाप पूर्ण बात को सुनकर वह कन्धार नरेश कामरान शिकारी भयभीत होकर भगवान् से कहने लगा कि यदि आपके प्रभाव से यह मृग शावक सजीव होकर पहिली जैसी हालत में हो जावे तो आज से मैं शिकार खेलना बन्द कर दूंगा, यवन की यह बात सुनकर भगवान् ने उसकी ओर देखा। देखते ही वह सजीव होकर चलने लगा परन्तु कुछ दिन बीतने पर कामरान अपनी प्रतिज्ञा भूलकर फिर शिकार खेलने लगा अन्त में विक्रम सवत् १६११ में बाबर के पुत्र हुमायू ने काबुल पर चढ़ाई करके लड़ाई में कामरान को मार कर उसकी आखें निकलवालीं कामरान हुमायू का छोटा पुत्र था। भगवान् का दिया हुआ शाप अन्त में सफल होकर रहा। इस प्रकार के अनेक इतिहास भगवान् की योग सिद्धि का महत्व दिखा रहे हैं जो इस भूतल पर हो चुके हैं॥ ८१—९०॥

दिनानि कतिचित्तत्र गान्धारविषये वसन् ।
मुनिरेष यथामार्गं बभ्राम वनभूमिषु ॥९१॥
मार्गे समागतानन्यान्गिरीनवटसङ्कुलान् ।
समतीत्य महाघोरं विषयान्तरमभ्यगात् ॥९२॥

तत्रापि कृतसञ्चारो दिशं वरुणलाञ्छनाम् ।
विजित्य यवनाक्रान्तां प्रत्यावर्तत भारतम् ॥६३॥
येन मार्गेण संयातस्तेनैव पुनराव्रजन् ।
क्रमशः प्राप्तमनुजं पेशावरमुपागमत् ॥६४॥
मातुः सन्देशमादाय तत्रायातमुपस्थितम् ।
धर्मचन्द्रं समालोक्य मुनिस्तमिदमब्रवीत् ॥६५॥
किमर्थं म्लानवदनः समायातोसि मातरम् ।
विहाय वद तत्सर्वं यन्मात्रा समुदीरितम् ॥६६॥
धर्मचन्द्रो निशम्येदं मुनेर्वचनमादरात् ।
विनीतः प्राह भगवन्नवाच्यं श्रूयतामिदम् ॥६७॥
ऋत्वङ्कबाणेन्दुमिते शुभे विक्रमवत्सरे ।
मासे तथाऽश्विने कृष्णदशम्यां त्वामनुस्मरन् ॥६८॥
लोकमेनं परित्यज्य परलोकमनुस्मरन् ।
पिता ते निधनं प्राप्तस्तद्वियोगेन दुःखिता ॥६९॥
माता तवाननमिदं द्रष्टुमुत्सहतेऽबला ।
तदेहि सत्वरं तस्याः सविधे भव धैर्यदः ॥१००॥

इस प्रकार के आश्चर्य मय कार्य करते हुये आप कन्धार में कुछ दिन रहकर वहां से शिवबुलान चले गये मार्ग में आये हुये अनेक वन तथा गहर पर्वत कन्दराओं को पार करते हुये आप अत्यन्त भयंङ्कर बिलोचिस्थान पहुंचे। वहां पर भी प्रचार करते हुये अन्त में पश्चिम दिशा को जीत कर भारत के लिये लौट पड़े मार्ग से पहिले आये थे उसी से फिर लौट कर पेशावर आगये। इसी समय का सन्देश लेकर वहाँ पर आये हुये धर्मचन्द्र को देख कर भगवान् कहने कि माता को छोड़ कर इस समय यहां पर क्यों आये हो ? जो कुछ सन्देश माता जी ने भेजा है उसे कहो, भगवान् की यह आज्ञा पाकर धर्मचन्द्र ने कहा कि भगवन् !! विक्रम सवत् १५९६ की आश्विन वदी दशमी के दिन आपको याद करते करते आपके पिता जी परलोक सिधार गये उनके वियोग में अत्यन्त

दुःखित आप की माता आपको देखना..चाहती हैं इसलिये यहां से आप जल्दी उनके पास चलिये और उनको धैर्य पूर्वक सान्त्वना दीजिये ॥ ९१—१०० ॥

भवानेवाधुना तस्याः प्राणाधारः परं बलम् ।
शरण्यः सर्वलोकानां भक्तानुग्रहकारकः ॥ १०१ ॥
निशम्येदं वचस्तस्य धर्मचन्द्रस्य धीमतः ।
उवाच मुनिरप्राप्तं किमपि प्रतिचिन्तयन् ॥ २ ॥
धैर्यावलम्बनं मातुस्त्वया पूर्वं विधीयताम् ।
अहमप्यागमिष्यामि गतानुगतिकक्रमात् ॥ ३ ॥
मुनेरिदं वचः श्रुत्वा निवृत्ते मातुरन्तिकम् ।
धर्मचन्द्रे मुनिस्तत्र कृतवान्समयोचितम् ॥ ४ ॥
भक्तानुपस्थितानत्र वियोगबहुदुःखितान् ।
सान्त्वयित्वा कथमपि प्रतस्थे भगवानितः ॥ ५ ॥
मार्गागतेषु नगरेष्वयमागतसज्जनान् ।
निबोधयन्धर्मतत्त्वं प्रपेदे मातुरन्तिकम् ॥ ६ ॥
ग्रामाद्बहिः कृतावासं निशम्य निजमात्मजम् ।
वियोगविधुरा सद्यः प्रपेदे जननी जवात् ॥ ७ ॥
समायातां मुनिर्दृष्ट्वा मातरं शोकविह्वलाम् ।
उवाच भगवत्यम्ब ! किमर्थमसि दुःखिता ॥ ८ ॥
या गतिः पुण्यशीलानां धर्ममार्गानुवर्तिनाम् ।
तामेव समनुप्राप्तः पतिस्ते जनको मम ॥ ९ ॥
शिवा भवन्तु पन्थानस्तस्य धर्मानुवर्तिनः ।
तवाप्यम्ब ! शिवः पन्था भवितास्ति न संशयः ॥१०॥
एवमाश्वासनपरैर्वचोभिः परिसान्त्वयन् ।
शिवावतारः श्रीचन्द्रो मातरं बह्वमन्यत ॥११॥

तत्रापि कृतसञ्चारो दिशं वरुणलाञ्छनाम् ।
विजित्य यवनाक्रान्तां प्रत्यावर्तत भारतम् ॥६३॥
येन मार्गेण संयातस्तेनैव पुनराव्रजन् ।
क्रमशः प्राप्तमनुजं पेशावरमुपागमत् ॥६४॥
मातुः सन्देशमादाय तत्रायातमुपस्थितम् ।
धर्मचन्द्रं समालोक्य मुनिस्तमिदमब्रवीत् ॥६५॥
किमर्थं म्लानवदनः समायातोसि मातरम् ।
विहाय वद तत्सर्वं यन्मात्रा समुदीरितम् ॥६६॥
धर्मचन्द्रो निशम्येदं मुनेर्वचनमादरात् ।
विनीतः प्राह भगवन्नवाच्यं श्रूयतामिदम् ॥६७॥
ऋत्वङ्कबाणेन्दुमिते शुभे विक्रमवत्सरे ।
मासे तथाऽश्विने कृष्णदशम्यां त्वामनुस्मरन् ॥६८॥
लोकमेनं परित्यज्य परलोकमनुस्मरन् ।
पिता ते निधनं प्राप्तस्तद्वियोगेन दुःखिता ॥६९॥
माता तवाननमिदं द्रष्टुमुत्सहतेऽबला ।
तदेहि सत्वरं तस्याः सविधे भव धैर्यदः ॥१००॥

इस प्रकार के आश्चर्यमय कार्य करते हुये आप कन्धार में कुछ दिन रहकर वहां से शिवबुलान चले गये मार्ग में आये हुये अनेक वन तथा गह्वर पर्वत कन्दराओं को पार करते हुये आप अत्यन्त भयङ्कर बिलोचिस्थान पहुंचे। वहां पर भी प्रचार करते हुये अन्त में पश्चिम दिशा को जीत कर भारत के लिये लौट पड़े जिस मार्ग से पहिले आये थे उसी से फिर लौट कर पेशावर आगये। इसी समय माता का सन्देश लेकर वहाँ पर आये हुये धर्मचन्द्र को देख कर भगवान् कहने लगे कि माता को छोड़ कर इस समय यहां पर क्यों आये हो ? जो कुछ सन्देश माता जी ने भेजा है उसे कहो, भगवान् की यह आज्ञा पाकर धर्मचन्द्र ने कहा कि भगवन् !! विक्रम सवत् १५९६ की आश्विन वदी दशमी के दिन आपको याद करते करते आपके पिता जी परलोक सिधार गये उनके वियोग में अत्यन्त

